सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते ।
दृश्यन्ते देवता यस्मिन्नेकस्य[1] बह्वपु द्वयोः ॥ १३ ॥
देवतार्षार्षच्छन्दोभ्यो[2] वैविध्यं तस्य जायते[3] ।
ऋषिसूक्तन्तु यावन्ति सूक्तान्येकस्य[4] वै स्तुतिः ॥ १४ ॥
देवतैका तु यावत्सु देवतायास्तदुच्यते[5] ।
यावदर्थसमाप्तिः स्यादर्थसूक्तं वदन्ति तत् ॥ १५ ॥
समानच्छन्दसो यास्तु[6] तच्छन्दःसूक्तमुच्यते ।
वैविध्यमेतत्सूक्तानामिह[7] विद्याद्यथातथम् ॥ १६ ॥
देवतानामधेयानि मन्त्रेषु त्रिविधानि तु ।
सूक्तभाञ्ज्यथ ऋग्भाञ्जि तथा नैपातिकानि तु ॥ १७ ॥
सूक्तभाञ्जि भजन्ते वै सूक्तान्यृग्भाञ्जि वै[8] ऋचः ।
मन्त्रेऽन्यदैवतेऽन्यानि[9] निगद्यन्ते प्रसङ्गतः[10] ॥ १८ ॥

---

(१) चित्रं वदृदृश्यते यास्मिन्नेतस्यामिति क० घ० । एकस्येत्यत्र एकस्मिन्निति घ० ।
(२) देवतार्षार्षच्छन्दस्त इति ख० ।
(३) वैविध्यस्य प्रजायते इति ख० ग० ङ० ।
(४) ऋषिसूक्तानि तान्यत्र यावन्त्येकस्येति क० घ० ।
(५) अस्मिन् श्लोकार्द्धस्थले ख० ग० ङ० पुस्तकेषु श्रूयन्ते तानि सर्वाणि ऋषेः सूक्तं हि तस्य तत् इति पाठो वर्त्तते ।
(६) या स्युरिति ख० ग० ङ० ।
(७) वैविध्यमेवं सूक्तानामिहेति ख० ग० ङ० ।
(८) वै इत्यत्र यैरिति क० ख० घ० ङ० ।
(९) यानि इति घ० ।
(१०) निगद्यन्तेऽत्र कानिचित् इति ख० ग० पुस्तकान्तरञ्च ।

सालोक्यात्साहचर्याद्वा तानि नैपातिकानि तु।
तस्माद्बहुप्रकारेऽपि[१] सूक्ते स्यात्सूक्तभागिनी ॥ १९
देवता तद्यथासूक्तमविशेषं[२] प्रतीयते।
भिन्ने सूक्ते[३] वदेदेव देवतामिह लिङ्गतः ॥ २० ॥
तत्र तत्र यथावच्च मन्त्रान् कर्मसु[४] योजयेत्।
देवतायाः परिज्ञानात्तद्धि कर्म समृध्यते ॥ २१ ॥
आद्यन्तयोस्तु सूक्तानां प्रसङ्गपरिकीर्त्तनात् ।
स्तोतृभिर्देवतास्तास्ता उपेक्षेतेह[५] मन्त्रवित् ॥ २२ ॥
तत् खल्वाहुः कतिभ्यस्तु कर्मभ्यो नाम जायते ।
सत्वानां[६] वैदिकानां च[७] यदन्यदिह[८] किञ्चन ॥ २३ ।
नवभ्य इति नैरुक्ताः पुराणाः[९] कवयश्च ये ।
मधुकः श्वेतकेतुश्च[१०] गालवश्चैव मन्यते[११] ॥ २४ ॥
निवासात्कर्मणो रूपान्मङ्गलाद्वाच आशिषः ।

---

(१) बहुप्रकारेऽपि इति क० ङ० घ०।
(२) अविशेष्येति ख०, अविशेष्यमिति ग० ङ० पुस्तकान्तरञ्च।
(३) भिन्नसूक्ते इति क० घ०।
(४) कर्म प्रयोजयेदिति ख०।
(५) देवतानाम्ना उपेक्षेतेह इति ख०। देवतानाम्नामपेक्षेतेह इति क० घ०।
(६) सत्त्वानामिति क०।
(७) वा इति क० ग०।
(८) यद्वान्यदिहेति क० घ०।
(९) पौराणा इति क० घ०।
(१०) मधुकाश्च तकेताश्चेति क० घ०।
(११) मन्यते इति क० ख० घ० ङ०।

यदृच्छयोपवसना(१)त्तथामुष्यायणाज्जपात्(२) ॥ २५ ॥
चतुर्थं इति तचाङ्ग्योस्तगार्ग्यरथीतराः(३) ।
आशिषोऽथार्थवैरूप्या(४) द्वाचः कर्मण एव च ॥ २६ ॥
सर्वाण्येतानि नामानि कर्मतस्त्वाह(५) शौनकः ।
आशीरूपञ्च वाक्यञ्च(६) सर्वं भवति कर्मतः ॥ २७ ॥
यदृच्छयोपवसना(७) त्तथामुष्यायणाच्च(८) यत् ।
तथा तदपि कर्मैव तच्छृणुध्वञ्च(९) हेतुतः(१०) ॥ २८ ॥
प्रजाः कर्मसमुत्था(११) हि कर्मतः सत्त्वसन्ततिः(१२) ।
कश्चित् संज्ञायते(१३) सत्त्व निवासात्तत्प्रजायते(१४) ॥२९॥
यादृच्छिकं तु नामाभिधीयते(१५) लिह क्वचित्(१६) ।

---

(१) यदृच्छयोपवचनादिति क॰ ङ॰ घ॰ ।
(२) तथा स्यामुष्यायणाच्चेति क॰ घ॰ ।
(३) रथन्तरा इति ख॰ ।
(४) ज्याशिषोऽथ च वैरूप्यात् इति क॰ घ॰ । ज्याशिषोऽर्थवैरूप्यादिति ख॰ ङ॰ ।
(५) कर्म्मतस्त्वाह इति क॰ ग॰ ।
(६) वाच्यम्च इति ख॰ ग॰ ङ॰ ।
(७) यदृच्छयोपवचनादिति ख॰ ।
(८) यदृच्छया निवासाच्च यदा स्यामुष्यायणाच्चेति क॰ घ॰ ।
(९) तच्छृणु त्वं च इति ग॰ ।
(१०) हेतवः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(११) प्रजाकर्म्मसमुत्था इति क॰ ख॰ ।
(१२) कर्म्मयः सच जायते इति क॰, सत्वगा गतिः इति ख॰ ।
(१३) सतो निवसते इति क॰ घ॰, क्वचित् स जायते इति ग॰ ।
(१४) तच जायते इति घ॰ ।
(१५) नाम नामाधीयते इति ख॰ । यादृच्छिकं नाम नाम धीयते क॰ ङ॰ ।
(१६) यच्च क्वचिदिति ख॰, यत्त्विह क्वचिदिति घ॰ ।

औपम्यादेव[१] तद्विद्याद्[२] भावस्यैवेह कस्यचित् ॥ २० ॥
नाकर्मकोऽस्ति भावो हि न[३] नामास्ति[४] निरर्थकम्
नान्यत्र भावान्नामानि तस्मात्सर्वाणि कर्मतः ॥ २१ ॥
मङ्गलात् क्रियते यत्तु नामोपवचनाच्च[५] यत् ।
भवत्येव तु सा ह्याशीः स्वस्त्यादेर्मङ्गलानि च[६] ॥ २२
अपि कुत्सितनामाय[७]मिह[८] जीवेत्कथञ्चिरम् ।
इति क्रियन्ते नामानि भूतानां विदितान्यपि[९] ॥ २३
मन्त्रा नानाप्रकाराः स्युर्दृष्टा वै[१०] मन्त्रदर्शिभिः ।
स्तुत्या चैव विभूत्या च वाक्प्रभावेण चात्मनः[११] ॥ २४
स्तुतिः प्रशंसा निन्दा च संशयः परिदेवना[१२] ।
स्पृहाशीः कत्थना याञ्चा[१३]प्रश्नः प्रैषः प्रवह्लिका[१४] ॥ २५ ॥
नियोगश्चानुयोगश्च श्लाघा विलपितञ्च यत् ।

---

(१) औपम्यादपीति ख०, औपम्यादिह इति ग० घ० ङ० ।
(२) तद्वत्ते इति घ० ।
(३) ना इति घ० ।
(४) तन्नामाच्च निरर्थकमिति ख० ।
(५) यच्च नामोपवचनञ्च इति क० ख० घ० ।
(६) चाशास्ते मङ्गलानि च इति क० घ० । मङ्गलादिर्हेति ख० ङ० ।
(७) अचिकित्सितनामायमिति ख० ।
(८) अपि इति घ० ।
(९) निन्दितान्यपि इति क० घ० ।
(१०) ये इति ग० ङ० पुस्तकान्तरञ्च ।
(११) प्रभावाद्देवतात्मन इति ख० ग० अन्यत्पुस्तकञ्च ।
(१२) परिवेदना इति क० ङ० ।
(१३) कथनायाच्ञेति क० ।
(१४) प्रवल्हिका इति ख० ग० ।

आचिख्यासा[1]ऽथ संलापाः परिचाख्यान[2]मेव च ॥ २६ ॥
आहनस्या नमस्कारः प्रतिरोध[3]स्तथैव च ।
सङ्कल्पश्च प्रलापश्च प्रतिवाक्यञ्च नाम यत्[4] ॥ २७ ॥
प्रतिषेधोपदेशौ च प्रमादापह्नवौ च यत्[5] ।
उपप्रैषश्च यः प्रोक्तः सञ्ज्वरो नाम[6] विस्मयः ॥ २८ ॥
आक्रोशोऽभिष्टवश्चैवा[7]क्षेपः शापस्तथैव च ।
उपसर्गा निपातश्च[8] नाम चाख्यातमित्यपि[9] ॥ २९ ॥
भूतं भव्यं भविष्यच्च पुमांस्त्र्यथ[10]नपुंसकम् ।
एवंप्रकृतयो मन्त्राः सर्ववेदेष्विति स्थितिः[11] ॥ ४० ॥
तेषां निदर्शनार्थीया[12] ऋचोऽर्धर्चाः पदानि च ।
ब्राह्मणे चाथ कल्पे च निगद्यन्तेऽत्र कानिचित्[13] ॥ ४१ ॥

---

(१) आचिख्यासेति ख० ।
(२) सल्लापा' परिचाख्यानं इति घ० ।
(३) प्रतिरोध' इति घ० प्रतिषेध इति अन्यत्पुस्तकञ्च ।
(४) तथैव च इति ग० अन्यत्पुस्तकञ्च ।
(५) च ह इति ग० अन्यत्पुस्तकञ्च ।
(६) यस्य इति ख० ग० ङ० अन्यत्पुस्तकञ्च ।
(७) आक्रोशोऽभिष्टवश्चैव इति ग० अन्यत्पुस्तकञ्च, आक्रोशोऽभिष्टवश्चैव इति ख० ।
(८) उपसर्गा निपाताश्चेति क० घ०, उपसर्गा निपातश्चेति ख० ।
(९) चाख्यानमेव चेति क० ।
(१०) स्त्री च इति ग० अन्यत्पुस्तकञ्च ।
(११) सर्व्ववेदेषु सर्व्वशः इति ख० ग० ङ० अन्यत्पुस्तकञ्च । सर्व्वदेवेष्विति स्थितिरिति घ० ।
(१२) वाक्यार्थदर्शनार्थीया इति ङ० अन्यत्पुस्तकञ्च ।
(१३) विधौ कल्पे च देवे च निगद्यन्तेऽत्र कर्हिचिदिति क० घ० ।

शब्देनोच्चरितेनेह येन द्रव्यं प्रतीयते ।
तदाक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ ४२ ॥

अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः[१] ।
तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ ४३ ॥

क्रियासु बह्वीष्वभिसंश्रितो यः
पूर्वापरीभूत इहैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध
आख्यातशब्देन तमर्थमाहुः ॥ ४४ ॥

क्रियाभिनिर्वृत्तिवशोपजातः
कृदन्तशब्दाभिहितो यदा स्यात् ।
सङ्ख्याविभक्त्यव्ययलिङ्गयुक्तो
भावस्तदा द्रव्यमिवोपलक्ष्यः[२] ॥ ४५ ॥

यथा नानाविधैः शब्दैरपश्यन्नृषयः पुरा ।
विविधान्यपि[३] वाक्यानि तान्यनुक्रमतः शृणु ॥ ४६ ॥

रूपादिभिः स्तुतिः प्रोक्ताऽऽशीः[४] स्वर्गादिभिस्तथा ।
यानि वाक्यान्यतोऽन्यानि[५] तान्यपि स्युरनेकधा ॥ ४७ ॥

---

(१) विभक्तय इति ग० चान्यत्पुस्तकेषु ।
(२) शब्देनेत्यादि भावस्तदा द्रव्यमिवोपलक्ष्यः इत्यन्तः सन्दर्भः क० घ० चिह्नितपुस्तकयोर्नोपलभ्यते ।
(३) विविधानीह इति ख० ग० घ० ।
(४) आशीरिति क० ख० ग० ।
(५) यानि इति चान्यत्पुस्तकेषु ।

मन्त्रे[१] प्रशंसा[क] भोजस्य[२] चिचदत्[ख] सौभरेः[३][ग]स्तुतिः।
आक्रोशार्थास्तु दृश्यन्ते [घ]माता चेत्यभिमेथति[४] ॥४८॥
स्वक्रोधमन्त्रं[ङ] निन्दा च[५] प्राप्तं[च] येमेत्यूगेव तु।
याञ्चा[६] [छ]यदिन्द्रचित्रेति चेपो भीदमिति लृचि ॥४९॥
आशीस्तु[ज] वात आवातु दण्डेति परिदेवना[७]।
प्रश्नश्च प्रतिवाक्यञ्च[झ] पृच्छामि त्वेत्यृचौ पृथक् ॥५०॥
संशयोऽधःखिदासीच[ञ] कत्यना[८] स्या[ट]दहं मनुः।
इमं नो[ठ] यज्ञमित्यस्यां[ड] नियोगः[९] पाद उच्यते[१०] ॥५१॥

---

(१) मन्त्रः इति क० घ०।

(२) प्रसक्राक्रोशस्य इति क० घ० मन्त्रप्रशंसा भोजस्येति ग०।

(३) सौभरस्तुतिरिति ख०।

(४) मा नामेत्याभिमेथ्यति इति ख०, माता सेत्यभिमेथति इति क०ङ०।

(५) स्वक्रोधमन्त्रनिंदाच इति ख०।

(६) याच्ञां इति ख०, याच्ञा इति ग०, यचना इति घ० ङ०।

(७) दण्डादिपरिदेवना इति घ०, दण्डेतिपरिदेवना इति ख० च०।

(८) संशयोऽधः खिदासीदिस्वकाथना इति क० घ०, कच्छना इति ङ०।

(९) यज्ञमित्याद्यानियोगः इति ख०।

(१०) उच्यते इति क० घ०।

---

(क) ऋ० १०,१०७,१०। (ख) ऋ० ८,२१,१८। (ग) ऋ० ८,१९, २। (घ) ऋ० १,१६०, २१; १८५,१०। (ङ) ऋ० १०, ११७, ६। (च) ऋ० ८, २७,२०। (छ) ऋ० ५,३९, १। (ज) ऋ० १०,१८६, १। (झ) ऋ० १, १६४, ३४। (ञ) ऋ० १०, १२९, ५। (ट) ऋ० ४, २६, १। (ठ) ऋ० १, १, ४। (ड) ऋ० १, २६, १।

(क)इह प्रवील्लनुयोगः संलाप(१)स्तृगुपोयमे(२)(ख)।
प्रतिषेधोपदेशौ(३) तु अचेमेत्य(ग)चसंस्तुतौ(४) ॥५२॥
आख्यान(५)न्तु हये जाये(घ) विलापस्तु(६)नदस्य मा(ङ)।
अवीरामिव मा(च) श्लाघा(७) सुदेव इति(छ) तु स्पृहा ॥५३॥
नमस्कारः(ज) प्रुन.प्रेपे,(८) नमस्ते अस्तु विद्यते।
यद्भन्ययविदं तुभ्योऽहं स्यामिति यदुच्यते(९) ॥५४॥
यद्भन्यस्तु(झ) यदिन्द्राहं प्रलापस्त्वेतमस्य तु.(ञ)(१०)।
महानन्याहमस्मा तु प्रतिरोधो भुगित्युत(११) ॥५५॥

---

(१) संलाप इति क० ग० घ०।
(२) स्तृगुपोयमे इति ख० ग० पन्यत्पुस्तकस्य।
(३) प्रतिषेधापदेशौ इति घ० ङ०।
(४) अचेरित्यचसंस्तुत, इति घ०।
(५) आख्यानमिति पुस्तकान्तरम्।
(६) स्यादिति ख० ग० पुस्तकान्तरस्य।
(७) अवीरामात्मन. श्लाघा इति ख० ग० घ०।
(८) नमस्कारो नत प्रथे इति क० घ० प्रेष इति ख०, प्रेषे इति ङ०।
(९) यां कल्पयन्ति नो रय परिभास्त्वमिह ते इति क०।
(१०) यः इति ख० ग० ङ० पुस्तकान्तरस्य।
(११) महानन्याह नम्यासमात्रतिरागो भुगित्यपि इति ख०, भुगि-त्यपि इति ग०, भुगित्यमि इति पुस्तकान्तरं।

---

(क) ऋ० १, १४, ६। (ख) ऋ० ८, ८२, ४। (ग) ऋ० १०, ३४, १३। (घ) ऋ० १०, ९५, १। (ङ) १, १०९, ३। (च) ऋ० १०, ८६, ९। (छ) ऋ० १०, ९४, १४। (ज) ऋ० १, २४, १२, १३। (झ) ऋ० ८, १४, १। (ञ) ऋ० ६, १५, ४।

प्रमादस्त्वेष[१]हन्ताहं[क] नमस्व[ख] इत्यभिष्टवः[२] ।
इन्द्राकुत्सेत्युपप्रैषो[ग][३] न विजानामि[घ] संज्वरः ॥ ५६ ॥
होतायक्षदिति प्रैषः[४] को अद्धेति तु विस्मयः ।
जामय्य[५]पह्नवो नेति वितताद्धिः[ङ] प्रवह्लिका[६] ॥ ५७ ॥
[च]न मृत्युरासीदित्येतामाचिख्यासां[७] प्रचक्षते[८] ।
*अभिशापो[९]प्रजाः सन्तु भद्र[१०]माशीस्तु[छ] गौतमे[११] ॥ ५८ ॥
यद्यप्येवं प्रकार[१२]न्तु शक्यं द्रष्टुमिहार्षजम्[१३] ।

---

(१) प्रमोदस्त्वेष इति घ० ।

(२) प्रमादस्त्वेकहन्ताहं नमस्व इत्यन्वव इति ख०, नसस्व इत्यमन्दवः इति ग० ।

(३) इन्द्राकुत्सेत्कपप्रैषो इति ख०, इन्द्राभरेत्युपप्रैषो इति क० ख० ।

(४) होतायच्चदितिप्रैषा इति ख० ।

(५) जामये इति घ०, जामयु इति ग०, यामयु इति ख० ।

(६) प्रवल्हिका इति ख० ग० ।

(७) नाचिख्यासमिति क०, माविह्यासामिति ख०,माचिख्यासमिति घ० ।

(८) प्रचच्चसे इति क०, प्रचच्चमे इति ख० ।

(९) व्याविशापोः इति ख० ।

(१०) भद्रमिति ख० ।

(११) इगौतमे इति ख० ।

(१२) अद्यमेव प्रकारमिति ख० ।

(१३) इतीदृशमिति ख० ग० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ११९, ९ । (ख) ऋ० ७, ३८, १० । (ग) ऋ० ५, ३१, ९ । (घ) ऋ० १, १६४, ३७ । (ङ) ऋ० १, ११२, ४ । (च) ऋ० १०, १२९, २ । (छ) ऋ० १, ७९, १० ।

वक्तुं प्रयोगतश्चैषामृक्सूक्तार्धर्चसंश्रितम्[१] ॥ ५८ ॥
एते तु मन्त्रवाक्यार्था देवतां सूक्तभागिनीम्[२] ।
संश्रयन्ते[३] यथान्यायं स्तुतिश्चैवानुमानिकी[४] ॥ ६० ॥
भवद्भूतं भविष्यच्च जङ्गमं स्थावरञ्च यत्[५] ।
अस्यैके[६]सूर्यमेवैकं प्रभवं प्रलयं विदुः ॥ ६१ ॥
[क]असतश्च [ख]सतश्चैव [ग]योनिरेषा[७] [घ]प्रजापतिः ।
यदक्[ङ]षरञ्चा[च]व्यय[छ]ञ्च यच्चैत[ज]द्ब्रह्म[९]शाश्वतम् ॥ ६२ ॥
कृत्वैव[१०] हि[झ] त्रिधा[ञ]त्मानमेषु लोकेषु [ट]तिष्ठति ।

---

(१) ऋक्सूक्तार्धर्चमाश्रितमिति इति क०, चैषा ऋक्सूक्तार्धर्चसंश्रितमिति ख० ।
(२) देवतां सूक्तभागिनामिति क० घ०, देवता सूक्तभागिनी इति ख० ।
(३) संभूयते इति ख० ।
(४) स्वा चानुमानिकी इति ख०, तथानुमानिकी इति घ० ।
(५) भवद्भूतस्य भव्यस्य जङ्गमस्थावरस्य च इति ख० ग० पुस्तकान्तरञ्च ।
(६) एते इति क० घ० ।
(७) एषामिति क० ।
(८) यदक्षरञ्च वाच्यमिति ग०, वाक्यमिति ङ० पुस्तकान्तरञ्च ।
(९) यच्चैतद्ब्रह्म इति ग० ङ० पुस्तकान्तरञ्च ।
(१०) कृत्वैष इति ख० ग० पुस्तकान्तरञ्च ।

---

(क) ऋ० ५, १२, ४ । (ख) ऋ० १, ३६, ६ । (ग) ऋ० १, १०४, १ । (घ) ऋ० ४. ५३, २ । (ङ) ऋ० १, १६४, ४२ । (च) ऋ० ६, ६७, ९ । (छ) ऋ० १, १०, ४ । (ज) ऋ० १, ११७, २४ । (झ) ऋ० १, १६३, ६ । (ञ) ऋ० १, ५१, ११ ।

[क]देवान् यथायथं[ख] सर्वान् निवेश्य[ग] स्वेषु[घ] रश्मिषु ॥ ६ ३ ॥
एतद्भूतेषु[१] लोकेषु अग्निभूतं स्थितं त्रिधा ।
[ङ]ऋषयो [च]गीर्भि[छ]रर्चन्ति व्यञ्जितं[२] [ज]नामभि[झ]स्त्रिभिः ॥ ६ ४ ॥
तिष्ठत्येव च[३] [ञ] भूतानां[ट] जठरे जठरे ज्वलन् ।
त्रिस्थानं चैनमर्चन्ति होत्रायां[ठ] वृक्तबर्हिषः ॥ ६ ५ ॥
इहैव[ड] पवमानो[ढ]ऽग्नि[४]र्मध्यमोऽग्निस्तु[ण] पावकः[५] ।
असुष्मिन्नेव[६] त्रिभिस्तु लोकेऽग्निः[त] ऋषिरुच्यते ॥ ६ ६ ॥
इहाग्निभूतस्त्वृषिभिर्लोके स्तुतिभिरीडितः[७] ।
[थ]जातवेदाः स्तुतो मध्ये स्तुतो[द] वैश्वानरो दिवि ॥ ६ ७ ॥

---

(१) एतमेवैषु इति क॰ घ॰ ।
(२) व्यञ्जकमिति ङ॰ घ॰ पुस्तकान्तरञ्च ।
(३) एष च इति ख॰, एष हीति ग॰ पुस्तकान्तरञ्च ।
(४) पवमानाग्निरिति क॰ घ॰ ।
(५) वनस्पतिरिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(६) अमुष्मिन्नेव इति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(७) ईषितः इति क॰ ख॰ ङ॰ ।

---

(क) ऋ॰ १, १, २ । (ख) ऋ॰ १, १९१, ८ । (ग) ऋ॰ ८, ८४, ८ । (घ) ऋ॰ १, १३४, ४ । (ङ) ऋ॰ १, ४८, १४ । (च) १, ९, ९ । (छ) ऋ॰ १, १०, १ । (ज) ऋ॰ १, १५५, ६ । (झ) ऋ॰ ८, ५९, ५ । (ञ) ऋ॰ ३, २७, ९ । (ट) ऋ॰ १, १०४, ९ । (ठ) ऋ॰ १, ३, ३ । (ड) ऋ॰ ८, १०१, १४ । (ढ) ऋ॰ १, १, २ । (ण) ऋ॰ १, ६०, ४ । (त) ऋ॰ १, ६६, १ । (थ) ऋ॰ १, ७७, ५ । (द) १, ५९, ६ ।

(क)रसान् रश्मिभि(ख)रादाय(ग) वायुनाऽयं गतः सह(१)।
(घ)वर्षत्येष च यल्लोके(ङ) तेने(च)न्द्र (छ)इति स स्मृतः(२) ॥ ६८ ॥
(ज)अग्नि(झ)रस्मि(ञ)न्नथेन्द्रस्तु मध्यमो(३)(ट)वायुरेव च ।
(ठ)सूर्यो (ड)दिवीति विज्ञेयास्तिस्र एवेह(४) देवताः ॥ ६९ ॥
एतासामेव माहात्म्यान्नामान्यत्वं विधीयते ।
तत्तत्स्थानविभागेन तत्र तत्रोपलक्षयेत्(५) ॥ ७० ॥
(ढ)तासा(ण)मियं (त)विभूतिर्हि (थ)नामानि यदनेकशः ।
(द)आहुस्तासान्तु मन्त्रेषु(ध) कवयोऽन्योऽन्ययोनिताम्(६) ॥७१॥
यथास्थानं(न) प्रदिष्टास्ता(७) सामान्येन देवताः ।

---

(१) सह संस्तुत इति क० घ०।
(२) तु स्तुतः इति क० घ०।
(३) मध्यत इति ग०।
(४) एवहि इति क० ख०।
(५) तत्र तत्रैव दृश्यते इति ग० ङ० पुस्तकान्तरेषु।
(६) अन्योऽन्ययोगितामिति ख०।
(७) स्तु इति क०।

---

(क) ऋ० १, १९, ८। (ख) ऋ० ४, २६, ६। (ग) ऋ० १, १४, १०। (घ) ऋ० ५, ८४, ३। (ङ) ऋ० १, २१, ६। (च) ऋ० १, २, ५। (छ) ऋ० १, १०९, ३। (ज) ऋ० १, १, २। (झ) ऋ० १, ९, ९। (ञ) ऋ० १, ४, ३। (ट) ऋ० १, १३४, ३। (ठ) ऋ० १, २३, १७। (ड) ऋ० १, ६, १। (ढ) ऋ० १, ३२, ८। (ण) ऋ० १, ४८, ७। (त) ऋ० १, ३०, ५। (थ) ऋ० १, ७२, ३। (द) ऋ० १, ११८, ३। (ध) ऋ० ५, ५७, ८। (न) ऋ० ३, २०, १२।

तद्भक्तास्तत्प्रधानाश्च(क) केचिदेवं वदन्ति ताः(१) ॥ ७२ ॥
(ख)पृथक् (ग)पुरस्ताद्ये त्वुक्ता(२) लोकादिपतय(घ)(३)स्त्रयः ।
(ङ)तेषा(च)मात्मैव तत्सर्वं यद्यद्भक्तिः प्रकीर्त्यते(४) ॥ ७३ ॥
तेजस्ते(छ) वायुधं(५) प्राङ्वाहनश्चैव तस्य तत्(६) ।
(ज)द्यामैन्द्रीश्च (झ)दिव्याश्च (ञ)वाचमेवं पृथक् स्तुताम् ॥ ७४ ॥
वक्रदेवतायाः (ट)स्तुतयो द्वन्द्वशः स्तुतयश्च(७) याः ।
प्राधान्यमेव सर्वासु(८) पत्नीनामेव(९)(ठ) तास्वपि ॥ ७५ ॥

---

(१) नैवं केचिद्वदन्ति तु इति क० घ०, तु इत्यत्र ता इति पुस्तकान्तरं ।
(२) येत्युक्ता इति ख०, पुरस्ताद्यौयुक्ता इति घ० ।
(३) लोकाधिपतय इति क० घ ।
(४) यदन्यद्भक्ति कोर्य्यते इति क० घ० ।
(५) तेजस्ते वायव इति क० ङ०, वायवा इति ग० । तेजसे वायवा इति ख०, ।
(६) यस्य यत् इति क० ख० ग० ङ० पुस्तकान्तरञ्च ।
(७) द्विवत्सं स्तुतयश्च इति ग० ङ० पुस्तकान्तरञ्च, द्विवत्सं ततयश्च इति ख० ।
(८) प्राधान्यमेषा भूताना इति क० घ० ।
(९) इव इति ख० ग० ङ० ।

---

(क) ऋ० ५, ३७, २ । (ख) ऋ० १, १२१, २ । (ग) ऋ० १, १२३, १० । (घ) ऋ० १, ३४, २ । (ङ) ऋ० १, २, १ । (च) ऋ० १, ११५, १ । (छ) ऋ० २, १५, ४ । (ज) ऋ० १, ११, १६ । (झ) ऋ० ८, ८७, १० । (ञ) ऋ० १, ४०, ६ । (ट) ऋ० ६, ३४, १ । (ठ) ऋ० ९, २८, ८ ।

[क]स्थानं [ख]नामानि भक्तीश्च[१] देवतायाः स्तुतौ स्तुतौ ।
सम्पादयन्नुपेक्षेत[२]यांकाञ्चिदिह सम्पदम् ॥ ७६ ॥
अग्निभक्तिस्तु तान् सर्वान[ग]ग्नावेव[३] समापयेत् ।
यदिन्द्रभक्ति तच्चेन्द्रे[४] [घ]सूर्ये[५] सूर्यानुगस्य[ङ] यत् ॥ ७७ ॥
निरूप्यते[६] हवि[च]र्यस्यै[७] सूक्तन्तु [छ]भजते च [ज]या ।
[झ]सैव [ञ]तत्र प्रधानं स्यान्न[८]निपातेन [ट]याः [ठ]स्तुताः ॥७८॥
[ड]इति[९]त्रयाणामेतेषा[१०] [ढ]मुक्तः सामासिको विधिः ।
समासेनैवमुक्तस्तु[११] विस्तरेण त्वनुक्रमः[१२] ॥ ७९ ॥

---

(१) भक्तिश्चेति क॰ घ॰ ।
(२) संवादो यस्यपेक्षेत इति क॰ ।
(३) या सर्व्वामग्नावेव इति क॰ ।
(४) यदिन्द्रभक्तितच्चेन्द्रे इति क॰ घ॰ ।
(५) सौर्य्ये इति ङ॰ पुस्तकान्तरस्य ।
(६) निरुप्यत इति घ॰ ।
(७) यस्मै इति घ॰ ।
(८) तत्र तत्र प्रधानोऽसौ न इति क॰ घ॰ ।
(९) इद इति क॰ घ॰ ।
(१०) एवैषामिति ग॰ ।
(११) समापयन्तु तत्सर्व्वमिति क॰ घ॰ ।
(१२) त्वनुक्रमादिति घ॰ ।

---

(क) ऋ॰ ५, ७६, ४ । (ख) ऋ॰ १, ७२, ३ । (ग) ऋ॰ १, १२४, १ । (घ) ऋ॰ १, २३, १७ । (ङ) ऋ॰ १, १, ६ । (च) ऋ॰ १, १२, १ । (छ) ऋ॰ १, ९४, २ । (ज) ऋ॰ १, १२३, ४ । (झ) ऋ॰ १, २२, २ । (ञ) ऋ॰ १, ४८, १० । (ट) ऋ॰ १, ६, ६ । (ठ) ऋ॰ १, १०, ६ । (ड) ऋ॰ १, २३, १७ । (ढ) ऋ॰ ४, ३०, ७ ।

अवश्यं वेदितव्यो हि नाम्ना[१] [क]सर्वस्य विस्तरः ।
न हि [ख]नामान्यविज्ञाय [ग]मन्त्राः शक्या हि वेदितुम् ॥८०॥
सत्वान्यमूर्त्तान्यपि च [घ]देवता च[२] महर्षयः ।
तुष्टुवुश्चर्षयः शस्या[३][ङ] तासु तासु स्तुतिष्विह[च] ॥८१॥
यैस्त्वग्नि[४][छ]रिन्द्रः [ज]सोमश्च [झ]वायुः [ञ]सूर्यो [ट]बृहस्पतिः ।
[ठ]चन्द्रोऽथ[ड]विष्णुः[ढ]पर्जन्यः[ण]पूषा वा[५][त]ऽप्यृभवो[६][थ]ऽश्विनौ॥८२
[द]रोदसी [ध]मरुतो [न]देवाः[७] [प]पृथिव्यापः [फ]प्रजापतिः ।

---

(१) नाम्नां इति क० ङ०, नाम्नः इति घ० ।
(२) देवतावदिति क० घ० ।
(३) तुष्टुवुश्च प्रशंसश्चेति क० घ० ।
(४) यैरग्निरिति घ० ।
(५) वा इति ख० ङ० पुस्तकान्तरश्च ।
(६) पूषोषा भगवः इति क० घ० ।
(७) देव्यः इति क० घ० ।

---

(क) ऋ० १०,१४७,६ । (ख) ऋ० १, ७२, ३ । (ग) ऋ० ६,१०,१४ ।
(घ) ऋ० १, २२, ५ । (ङ) ऋ० २, २८, ९ । (च) ऋ० १, १, २ ।
(छ ऋ० १, १, २ । (ज) ऋ० १, २, ५ । (झ) ऋ० १, १८, ४ ।
(ञ) ऋ० १, १३४, ३ । (ट) ऋ० १, २३, १७ । (ठ) ऋ० १, १५०, ३ ।
(ड) ऋ० १, २२, १६ । (ढ) ऋ० ४, ५७, ८ । (ण) ऋ० १, २३, १४ ।
(त) ऋ० १, ११०, १ । (थ) ऋ० ५, ७५, ७ । (द) ऋ० १, १६७, ५ ।
(ध) ऋ० १, १५, २ । (न) ऋ० १, २३, १९ । (प) ऋ० १, २२,१६ ।
(फ) ऋ० ४, ५३, २ ।

[क]देवौ च [ख]मित्रावरुणौ पृथक् सह च ता[ग]वुभौ ॥७३॥
[घ]विश्वे च देवाः [ङ]सविता [च]त्वष्टा वै रूपकृन्मतः(१) ।
[छ]अश्वो [ज]ऽग्न[झ]र्त्विजो[ञ]वज्रो(२)[ट]ग्रावाणो रथसंयुतः(३) ॥७४॥
[ठ]स्तुताः पृथक् पृथक् [ड]स्वैः स्वैः सूक्तैर्ऋग्भिश्च(४) [ढ]नामभिः ।
स्तुतौ स्तुतौ प्रवक्ष्यामि [ण]तानि [त]तेषामनुक्रमात् ॥७५॥
व्यवस्थे[थ]न्मन्त्रमाग्नेय लिङ्गै[द]रग्नेश्च(५) लक्षितम् ।
हविष्यद्भिः(६) प्रधानैश्च(७) नामाकानैश्च केवलैः ॥७६॥

(१) रूपकृन्मुख इति घ० ।
(२) यज्ञ इति घ० ।
(३) रथसंयुग इति घ० ।
(४) सूक्तेभ्युश्च इति घ० ।
(५) तु इति घ० ।
(६) हविष्यद्भि इति ग० घ०, हविर्भाग्भिरितिपाठः समीचीनः ।
(७) निरूप्यैवमिति घ० ।

(क) ऋ० ६, ५६, ५ । (ख) ऋ० १, २५, १ । (ग) ऋ० १, १७६, ६ । (घ) ऋ० १, ८६, १० । (ङ) ऋ० १, २२, ८ । (च) ऋ० १, ३२, २ । (छ) ऋ० १, २६, ८ । (ज) ऋ० १, १४१, २ । (झ) ऋ० १, ६०, ३ । (ञ) ऋ० १, ५१, ७ । (ट) ऋ० १, ८६, ४ । (ठ) ऋ० ४, ३७, ५ । (ड) ऋ० १, ६८, ४ । (ढ) ऋ० १, १५५, ६ । (ण) ऋ० १, ५३, ६ । (त) ऋ० १, २, १ । (थ) ऋ० १, ३१, १३ । (द) ऋ० १, ७४, २ ।

ऐन्द्रस्तु[क][१] मन्त्रो[२] वायव्यैर्लिङ्गै[ख]रैन्द्रैश्च लक्ष्यते[३] ।
नामधेयैश्च[४] [ग]वज्रस्य बलकृत्या बलेन च ॥ ८७ ॥
सौर्यस्तु लिङ्गैः[घ] सूर्यस्य[५] गुणैः सर्वैस्तु[६] तैजसैः ।
[ङ]नामभिश्चैव[७] चन्द्रस्य सूक्तञ्च[८] [च]भजतेऽत्र यैः[९] ॥ ८८ ॥
एतासां[१०] देवतानान्तु नामधेयानुकीर्त्तनैः ।
[छ]यस्य यस्येह यावन्ति न व्यवस्यन्त्य[ज]तो[११][झ]ऽन्यथा ॥ ८९ ॥
[ञ]अयं प्रयोगस्त्वेतेषां[ट] ज्योतिषां[१२][ठ] त्रिषु[ड] वर्त्तते ।

---

(१) ऐन्द्रैस्तु इति ख० घ० ।
(२) मन्त्रै इति घ० ।
(३) लक्षितमिति घ० ।
(४) नामभिश्चैव इति क० घ० ।
(५) सौर्य्यैश्च इति घ० ।
(६) च इति ख० घ० ।
(७) नामधेयैश्चेति ख० ग० ङ० ।
(८) सूर्य्यन्तु इति क० घ० ।
(९) [illegible] इति ङ० पुस्तकान्तरेषु, अखिलैरिति घ० ।
(१०) अन्यासामिति घ० ।
(११) न व्यवस्यत्यत इति ग० घ० ।
(१२) ज्योतिःषु इति ख० घ० ।

---

(क) ऋ० १, १४७, ४ । (ख) ऋ० ३, ५३, ८ । (ग) ऋ० ५, ३२, ७ ।
(घ) ऋ० १, १४, ६ । (ङ) ऋ० १, १५५, ६ । (च) ऋ० १, १२३, ४ ।
(छ) ऋ० १, ५, ४ । (ज) ऋ० १, ६, ९ । (झ) ऋ० ४, ३२, ८ ।
(ञ) ऋ० १, १६, ७ । (ट) ऋ० १, ११३, १ । (ठ) ऋ० १, १५, ४ ।
(ड) ऋ० १, ८६, २ ।

लोकेषु मन्त्रवि[क]द्विद्वान् प्रयोगेनावसीदति ॥ ९० ॥
[ख]नीयतेऽयं नृभिर्यस्मा[ग]च्चयत्य[घ]स्मा[ङ]द्दसौ च तं[१] ।
[च]तेने [छ]मौ च [ज]क्रतुः [झ]कर्म समानानौ पृथक् पृथक्[२] ॥ ९१ ॥
य[ञ]द्विद्यते च[ट] जातस्य[३][ठ] जातैर्यदाऽच[४]विद्यते ।
तेनेमौ तुल्यनामानावुभौ लोकौ समाश्नुतः[५] ॥ ९१ ॥
विष्णुत्रयमेतेषां[६] [ड]भ्राजते द्योषि [ढ]मध्यमः ।
निपातमात्रे कल्प्यन्ते[७] तथा[८]श्रेयानि कानिचित् ॥ ९२ ॥

---

(१) सङ्गदिति घ० ।
(२) समानगौ इति घ० ।
(३) यतस्येति ख०, जात' यत् इति घ० ।
(४) च्यधेति घ० ।
(५) समश्नुता इति घ० ।
(६) स्वगन्तिरयमेकस्तु इति घ०, त्रिष्टव्य नयमेतेषामिति ख० ।
(७) कल्पन्ते इति घ०, काव्यन्ते इति ग० ।
(८) तस्य इति घ० ।

---

(क) ऋ० १, २४, १३ । (ख) ऋ० ६, २७, ३ । (ग) ऋ० ४, २१, ४ । (घ) १, १७१, ४ । (ङ) ऋ० १, १०५, १६ । (च) ऋ० १, ११, ६ । (छ) ऋ० २, ४०, २ । (ज) ऋ० १, १७, ५ । (झ) ऋ० १, ११, ८ । (ञ) ऋ० १, ४४, ६ । (ट) ऋ० १, ६६, ७ । (ठ) ऋ० ५, १५, २ । (ड) ऋ० १०, २०, ३ । (ढ) १, १६४, १ ।

(क)अर्चिभि:(ख) केश्ययं(१) त्वग्निर्विद्युद्भिश्चेष(२) मध्यम: ।
असौ तु(ग) रश्मिभि:(३) केशी तेनैनामाह(४) केशिन:(घ) ॥ ९३ ॥
एतेषां तु पृथक्त्वेन चयाणां केशिनामिह ।
संलक्ष्यन्ते प्रक्रियासु त्रय: केशिन इत्यृचि(५) ॥ ९४ ॥
[illegible] चैवैषां(६) प्रसूतिर्वा विभूति: स्थानजन्म वा(७) ।
निर्वक्तुं शक्यमेतैर्हि कृत्स्नं व्याप्तमिदं जगत् ॥ ९५ ॥
(ङ)वैश्वानरं(८) श्रितो ह्यग्निरग्निं(९) वैश्वानर: श्रित: ।
अनयो(च)र्जातवेदाश्च तथैव(छ) जातवेदसि(१०) ॥ ९६ ॥

---

(१) अर्चिभि: केश्ययं इति ख०, अर्चिभिः केश्ययमिति ङ० ।
(२) श्चेव इति ग० घ० ।
(३) कुरश्मिभिरिति ख० ।
(४) तेन नामाह इति घ० ।
(५) प्रक्रियासु त्रयश्च वीर्यानि च इति घ० ।
(६) नत्वेवैषा इति घ० ।
(७) विभूतिस्थानजन्म वा इति ख० ग० ।
(८) वैश्वानरे इति क० घ० ।
(९) अग्नौ इति क० घ० ।
(१०) तु तथैवौ जातवेदसौ इति क० ख० ग० ङ० ।

---

(क) ऋ० ५, ७९, ८ । (ख) ऋ० १०, १०२, ६ । (ग) ऋ० १, १९, ८ । (घ) ऋ० १, १६४, ४४ । (ङ) ऋ० ७, ५, २, । (च) ऋ० १, ७७, ५ । (छ) ऋ० ६, १६, ४२ ।

आलोक्याच्चैकजातत्वाद्[१] व्याप्तिमत्त्वात्तु तेजसः[२] ।
तस्य तस्येह[३] देवत्वं दृश्यन्ते ते [४]पृथक्[५] स्तुताः ॥९७॥
यत्त्वाग्नेयमिति ब्रूमः[६] सूक्तभाक् तत्र[७] पार्थिवः ।
जातवेदस्यमित्युक्ते सूक्तेऽस्मिन् मध्यमः स्तुतः[८] ॥ ९८ ॥
वैश्वानरीयमिति तु यच्च ब्रूमो[९]ऽत्र वा क्वचित् ।
सूर्यसूक्तस्य[१०] भाक्तत्र ज्ञेयो वैश्वानरस्तुतौ[११] ॥ ९९ ॥
सूर्यप्रस्तुतावग्नी तु दृष्टौ[१२] पार्थिवमध्यमौ ।
एतेषामेव लोकानां त्रयाणामध्वरेऽध्वरे ॥ १०० ॥
[क]रोहात्प्रत्यवरोहेण चिकीर्षत्याग्निमारुतम्[१३] ।

(१) एकजन्यात्वेति क० घ० ।
(२) व्याप्तिमत्त्वाच्च तेजसः इति क० घ० ।
(३) यस्य यस्येह इति क० घ०, तस्य तस्य ह इति ख० रु० ।
(४) च इति ख० ग० ।
(५) स्तुतिषु इति घ० ।
(६) यच्चाग्नेयमिति ब्रूम इति ग०, यत्त्वाग्नेयमिति घ० ।
(७) सूक्तं भक्त्या तु इति क० घ० ।
(८) सूक्तं भक्त्या तु मध्यमः इति घ० ।
(९) इत्युक्ते यद्ब्रूयामो इति क० घ० ।
(१०) सूर्यं सूक्तस्येति ग० ।
(११) सूर्यभक्तस्य सूर्यस्य ज्ञेयो वैश्वानरो दिवि इति क० घ० ।
(१२) दृष्टौ इति ख०, दृश्यौ इति क० घ० ।
(१३) चिकीर्षन्नग्निमारुतमिति ग० ।

(क) ऋ० १, १९, २ ।

शस्तं[१] वैश्वानरीयेण सूक्तेन प्रतिपद्यते ॥ १०१ ॥
ततस्तु मध्यमस्थाना देवतास्तुप्रशंसति[२] ।
इन्द्रश्च[३] मरुतश्चैव स्तोत्रियेऽग्नि[४]मिमं पुनः ॥ १०२ ॥
तथैत[५]दुक्रमेतेषां विभूतिस्थानसम्भवम्।
यथा[६] च देवदेवस्य तत्र तत्रेह दृश्यते ॥ १०३ ॥
यच्च पृथिवीस्थानं पार्थिवं चाग्निमिश्रितम्[७] ।
तत्सर्वमानुपूर्व्येण[८] कथ्यमानं निबोधत ॥ १०४ ॥
जातवेदाः[क] श्रितो ह्य[९]ग्नि[ख]मग्निं वैश्वानरः[ग] श्रितः[घ] ।

---

(१) शास्त्रमिति ग० ।
(२) मध्यमे स्थानाद्देवतास्तत्प्रशंसति इति ख०, देवतास्त्वथ प्रशंसति इति घ० ।
(३) इन्द्रश्चेति ग० ।
(४) स्तोत्रियाग्निमिति घ० ।
(५) यथैतदिति ख० ग० घ० ।
(६) तथा इति ख० ग० ङ० ।
(७) वाग्निमिश्रितमिति क० घ०, वाग्विमिश्रितमिति ङ० ।
(८) चानुपूर्व्येणेति ग० घ० ङ० ।
(९) अपि इति घ० ।

---

(क) ऋ० ३, ७७, ५ । (ख) ऋ० १, १, १ । (ग) ऋ० १, ५९, ६ । (घ) ऋ० १, ७५, ३ ।

द्रविणोदा[क]स्तथेध्म[ख]श्च श्रितश्चाग्निं[१] तनूनपात्[ग] ॥ १०५॥
नराशंसः[घ] श्रितश्चैन[ङ] मेन[२]मेवाश्रित[३]स्त्विलः[च] ।
बर्हिर्द्वार[छ]श्च देव्यो[ज]ऽग्नि[४]मेन[५]मेव तु संश्रिताः ॥ १०६ ॥
नक्तोषा[झ] सा च देव्यौ[६] च होतारा[ञ]वेतदाश्रयौ[७] ।
देव्य[८]स्तिस्रः श्रिताश्चैनं त्वष्टा[ट] चैवैतदाश्रयः ॥ १०७ ॥
श्रितो वनस्पति[ठ]श्चैनं[९] स्वाहाकृतय[ड] एव च ।
अश्वश्च[ढ] शकुनिश्चैव मण्डूका[ण]श्चैतदाश्रयाः[१०] ॥ १०८ ॥

---

(१) श्चमिदिति घ० ।
(२) एतमेनमिति ग०, एवमेतमिति घ० ।
(३) श्चाश्रिता इति ख० घ० पुस्तकान्तरञ्च ।
(४) देवोऽग्निमिति ख० ।
(५) एतमिति घ० ।
(६) दैव्यौ इति ङ० ।
(७) एवदाश्रितौ इति घ०, होतारौ च तदाश्रयौ इति पुस्तकान्तरं ।
(८) देव्या इति ग० ।
(९) एवमिति ख० ।
(१०) तदाश्रया इति ख० ।

---

(क) ऋ० १, १५, ७-८ । (ख) ऋ० ८, ४५, २ । (ग) ऋ० १, १८८, २ । (घ) ऋ० १, १४२, ३ । (ङ) ऋ० १, ६, २ । (च) ऋ० १, १२८, १ । (छ) ऋ० १, १३, ६ । (ज) ऋ० १, १४०, ७ । (झ) ऋ० १, १३, ७ । (ञ) ऋ० १०, ६५, १० । (ट) ऋ० १, ३२, २ । (ठ) ऋ० १, ९०, ८ । (ड) ऋ० ६, ५, ११ । (ढ) ऋ० १, ३६, ८ । (ण) ऋ० ७, १०३, ७ ।

[क]ग्रावाण[1]श्चैन[2]मद्रा[3][ख]श्च नराशंसस्तथा रथः[ग] ।
[घ]दुन्दुभिश्चेषुधि[ङ]श्चैव[4] हस्तघ्नो[च][5] भीशवो[6] धनुः[छ] ॥१०९॥
[ज]ज्या चैतदाश्रितेषुश्च[7] श्रिता अश्वाजनी[झ][8] च या ।
[ञ]वृषभो द्रुघण[9]श्चैल[ट][10] मेतं पितुरुलूखलम्[11][ठ] ॥११०॥
नद्यश्चैवमापश्च सर्वाश्चौषधयस्तथा[12] ।
रात्र्यश्चाप्य[ड]रण्यानिः[ढ][13]श्रद्धे[ण]ला[त]पृथिवी[थ]तथा[14] ॥१११॥

---

(१) ग्रावणा इति ख०, ग्रावण इति ग० ।
(२) ग्वमिति ख०, एतमिति घ० ।
(३) मद्रा इति ग० ।
(४) एनमिति ग०, एतमिति ङ०, पुस्तकान्तरञ्च ।
(५) हस्तघ्नो इति पुस्तकान्तरं ।
(६) अभीशव इति पाठ ससकृततथा भाति ।
(७) आश्रयेषुरिति घ० ।
(८) आश्वाजनी इति ख०, चाश्वाजनी इति घ० ।
(९) वृषभो द्रुघण इति ग०, वृषाद्द्रुघण इति घ० ।
(१०) एनमिति ग० ङ० पुस्तकान्तरञ्च, एवमिति घ० ।
(११) वृषभेद्रुघणश्चैलमेवैतं पितुमुलूखलमिति ख० ।
(१२) नद्येति ख०, सर्वा ओषधयश्च ह्येति ग० ङ० पुस्तकान्तरञ्च ।
(१३) रात्रिरथाप्यरण्यानी इति ख०, रात्र्यथाप्यरण्यानी इति ग० ङ०, आदर्शपुस्तकमात्रे अरण्यानीति दीर्घस्वरान्तपाठोऽस्ति ।
(१४) श्रद्धा द्यावा पृथिव्यथेति क० घ० ।

---

(क) ऋ० १, ८९, ४ । (ख) ऋ० ८, ४२, ५ । (ग) ऋ० १, ३०, १८ ।
(घ) ऋ० १, २८, ५ । (ङ) ऋ० ६, ७५, ५ । (च) ऋ० ६, ७५, १४ ।
(छ) ऋ० ६, ७५, २ । (ज) ऋ० ६, ७५, ३ । (झ) ऋ० ५, ६२, ७ ।
(ञ) ऋ० १, ३१, ५ । (ट) ऋ० १०, ९५, १८ । (ठ) ऋ० १, २८, ६ ।
(ड) ऋ० ५, ४६, ८ । (ढ) ऋ० १०, १४६, २ । (ण) ७, ३२, १४ ।
(त) ऋ० १, १३, ९ । (थ) ऋ० १, २२, १३ ।

भजते चैन(१) मेवोर्व्या(क)(२) द्वन्द्वभूते च रोदसी(ख)(३)।
सुपलोलूखले(ग) चैनं(४) हविर्धाने च ये स्तुते ॥११२॥
जोष्ट्री(५)चोर्जाहुती(घ) चैनं(६) सुदुघा(७)(ङ) च विपाट्(च) सह।
द्यौ च देवौ सुनासीरौ(छ)(८) तौ चाग्नी चैतदाश्रयौ(९) ॥११३॥
लोके वै(१०) यस्य वै प्रातः सवनं(ज) क्रियते मखे(झ)।
वसन्त(ञ)शरदौ(ट) चर्तू स्तोमो(ठ)ऽनुष्टुबयो(ड) विराट्(ढ)(११) ॥११४॥

---

(१) चैवमिति ख॰, भजेते चैतमिति क॰ घ॰, भजेते चैतमिति ग॰।
(२) एवार्वी(घ) इति क॰ ग॰ घ॰।
(३) तु गेहया इति ख॰।
(४) एवेति क॰ घ॰।
(५) जोष्ट्रा इति ख॰।
(६) चोर्जाहुतिश्चैनमिति ख॰, एवेति क॰ घ॰।
(७) सतुग्धा इति ख॰।
(८) सुनावीरौ इति ख॰।
(९) चैवाग्नेतदाश्रयौ इति क॰ घ॰, चाग्नि चैतदाश्रयेति ख॰।
(१०) लोकोऽयमिति क॰ग॰ घ॰ ङ॰।
(११) च यस्मिन्नयम् इति क॰ घ॰।

---

(क) ऋ॰ १, १४, ६। (ख) ऋ॰ १, १६७, ५। (ग) ऋ॰ १, २८, ६।
(घ) ऋ॰ ८, ३६, ४। (ङ) ऋ॰ ३, ३३, १। (च) ऋ॰ ३, ३३, १।
(छ) ऋ॰ ४, ५७, ५। (ज) ऋ॰ १, १६, ५। (झ) ऋ॰ १, ६, ८।
(ञ) ऋ॰ १०, ९०, ६। (ट) ऋ॰ १, ७२, ३। (ठ) ऋ॰ १, ८, १०।
(ड) ऋ॰ १, २८, ६। (ढ) ऋ॰ १, १४०, २। (ण) ऋ॰ ६, ७५, ४।

गायत्री(क) चैकविंशश्च यच्च साम(ख)रथन्तरम्(१)(ग)।
साध्याः(घ) साम च वैराजमाप्य(ङ)श्च वसुभिः(च)(२) सह ॥११५॥
इन्द्रेण च मरुद्भिश्च सोमेन वरुणेन च।
पर्ज्जन्येनर्त्तुभिश्चैव विष्णुना चास्य संस्तवः ॥११६॥
अस्यैवाग्नेस्तु पूष्णा च(३) साम्राज्यं वरुणेन च।
देवता वाहनञ्चैव(४) हविर्षा(५) वहनं तथा ॥११७॥
देवतामर्थतत्त्वज्ञो मन्त्रैः संस्तूयते(६)हविः(७)।
असन्ततत्या(८)पि सतो(९) हविरेकं(१०) निरूप्यते ॥११८॥
कर्म दृष्टे च(११) यत् किञ्चिद्(१२) विषये(१३) परिवर्त्तते।

---

(१) साध्य रथन्तरमिति ख०।
(२) आप्यश्चवसुभिरिति ख०, आप्याश्च वसुभिरिति ग० घ० ङ०।
(३) पुषश्चेति ख०, पुषा चेति ङ० पुस्तकान्तरञ्च॥
(४) वापि इति क० घ०।
(५) हविष इति क० घ०।
(६) संयोजयेदिति क० घ०।
(७) विदुरिति ख०।
(८) असंस्कृतस्येति क० घ०।
(९) विततः इति घ०।
(१०) एषा इति ख०, एवमिति ग०।
(११) तु इति क० घ०, कर्म्म दृष्टेष्विति ङ० पुस्तकान्तरञ्च।
(१२) कश्चिदिति क० घ०।
(१३) विकथे इति ख०, विषये इति ङ०।

---

(क) ऋ० १०, १४, १६। (ख) ऋ० १,६२,२। (ग) ऋ० १०,१८८,१।
(घ) ऋ० १, १६४,५०। (ङ) ऋ० १, १०५, ६। (च) ऋ० १, ५८, ३।

इत्युक्तोऽयं गणः सर्वः पृथिव्यग्न्याश्रयो महान् ॥११८॥
यस्येन्द्रो[१] मध्यमस्थानो गणः सोऽयमतः परः ।
विमानानि च दिव्यानि गन्धर्वाप्सरसां[२]तथा ॥१२०॥
इन्द्राश्चयस्तु[३] पर्ज्जन्यो रुद्रो वायुर्बृहस्पतिः ।
वरुणः कश्च मृत्युश्च देवश्च ब्रह्मणस्पतिः[क] ॥१२१॥
मन्यु[४]श्च विश्वकर्मा च मित्रः क्षेत्रपति[५]र्यमः ।
तार्क्ष्यो वास्तोष्पतिश्चैव सरस्वांश्चैवमत्र च[६] ॥१२२॥
अपानपाद्धिक्रा[ख]श्च[७] सुपर्णो[ग]ऽथ पुरूरवाः[घ] ।
असतो[ङ]ऽसुनीति[च]र्वेन[छ]श्च[८] तथेन्दुश्च स्त्रियो दितिः[ज] (९) ॥१२३॥

---

(१) तैन्द्र इति क० घ० ।

(२) गन्धर्वाप्सरस इति क० घ०, गन्धर्वाप्सरसामिति ग० ङ० पुस्तकान्तरञ्च ।

(३) इन्द्राश्च यस्तु इति क० घ० ।

(४) मन्युरिति ख० ङ० ।

(५) मित्रक्षेत्रपतिरिति ख० ग० ।

(६) तत्र तु इति क० घ० ।

(७) अपान्नपाद्धिक्रा चेति क० घ० ङ०, अपान्नपाद्दधिक्राचेति ग० ।

(८) वैनश्चेति घ० ।

(९) तस्यैतस्याश्रये दिति इति क० घ०, तथदुश्च स्त्रियो दितिरिति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० २, २४, २ । (ख) ऋ० ४, ३८, ६ । (ग) ऋ० १, ३५, ७ । (घ) ऋ० १, ३१, ४ । (ङ) ऋ० ८, ६०, ५ । (च) ऋ० १०, १२, ४ । (छ) ऋ० १, ८३, ५ । (ज) ऋ० ७, १५, १२ ।

त्वष्टा[क] च सविता चैव वातो[ख][१]वाचस्पतिस्तथा ।
धाता प्रजापतिश्चैव अथर्वाण[ग]श्च[२] ये स्तुताः ॥१२४॥
भृगव[घ]श्चैवमग्निश्च[३] तथेला[ङ] चैव याः स्तुताः ।
विधातेन्दुरहिर्बुध्न्यः [च]सोमोऽहिरथ चन्द्रमाः ॥१२५॥
विश्वानर[छ]श्च वै[४]देव ऋभूणां[ज] संस्तुतो[५] गणः ॥१२६॥
मरुतोऽङ्गिरसश्चैव पितरश्चर्तुभिः सह ।
राका[झ][६]वाक्[ञ]सरमा[ट]स्पा[ठ]श्च[७]श्रगवो[ड]ऽप्या सरस्वती॥१२७॥
यम्यु[ड]र्वंशी[ढ]सिनीवाली[ण] पथ्या[त] स्वस्ति[थ]रुषाः कुहूः ।

(१) वाचः इति क॰ घ॰ ।
(२) वाथर्वाणश्चेति ख॰ ।
(३) श्येनश्चैवमाप्श्चेति ख॰ घ॰ ।
(४) चैवेति ख॰ पुस्तकान्तरञ्च ।
(५) वह्नाणा चाश्रितः इति क॰ घ॰ ।
(६) एका इति क॰ ।
(७) वाक्सरमाप्श्चेति ङ॰ ।
(८) यभ्रुरिति ख॰ ।

(क) ऋ॰ १, ३२,२ । (ख) ऋ॰ १, २८, ६ । (ग) ऋ॰ ६, ११, २ ।
(घ) ऋ॰ १, ५८, ६ । (ङ) ऋ॰ १, १३, ६ । (च) ऋ॰ १, १८६, ५ ।
(छ) ऋ॰ १, १८६, १ । (ज) ऋ॰ ४, ३५, २ । (झ) ऋ॰ २, ३२, ८ ।
(ञ) ऋ॰ १, १६४, ४५ । (ट) ऋ॰ १, ६२, ३ । (ठ) ऋ॰ १,१०५,६ ।
(ड) ऋ॰ १, ५८, ६ । (ढ) ऋ॰ १, १०१, ४ । (ण) ऋ॰ २, ३२, ८ ।
(त) ऋ॰ ३, ५४, ५ । (थ) ऋ॰ ३, ८६, ६ ।

पृथिव्यनुमतिर्धेनुः सीते(क)सा(ख)ख्या तथैव(१) गौः ।
गौरी(ग) च रोदसी(घ) चैव इन्द्राण्या(२)श्चैव वै पतिः ॥१२८॥
छन्दस्त्रिष्टुप् च पङ्क्ति(ङ)श्च लोकानां मध्यमश्च यः ।
एतेष्वेवाश्रयो(३)विद्यात्स्तवं(च) मध्यमस्य यत् ॥१२९॥
ऋतू च ग्रीष्महेमन्तौ यच्च साम्नोच्यते(४) बृहत् ।
शक्वरीषु(छ) च यद्गीतं नाम्ना तत्साम शाक्वरम् ॥१३०॥

इति बृहद्देवतायां प्रथमोऽध्यायः ।



(१) श्रीर्लाक्षिला दितिश्चेति क० घ०, सीतासाक्षा तथैवेति ख० ग०।
(२) चैवेन्द्राण्यथा इति ख० ।
(३) एकस्यैवाश्रयः इति क० घ०, आश्रये इति ख० पुस्तकान्तरेषु।
(४) साम्नोच्यते इति ख० ।

(क) ऋ० ४, ५७, ७ । (ख) ऋ० १, १२८, ७ । (ग) ऋ० ९,१२,३ । (घ) ऋ० १, १६७, ५ । (ङ) ऋ० १०, ११७, ८ । (च) ऋ० १, १६, ५ । (छ) ऋ० ७, ३३, ४ ।

# अथ द्वितीयोऽध्यायः।



आह चास्यैव तौ(१)सोमा(क)वाग्नयौ शाकटायनः(२) ।
यस्त्व(३) पञ्चदशो नाम्ना सङ्ख्यया(४) त्रिणवश्च(५) यः ॥१॥
संस्तुत(६)श्चैव पूष्णा च विष्णुना वरुणेन च ।
सोमवाय्वग्निकुत्सैश्च ब्रह्मणस्पतिनैव च ॥२॥
बृहस्पतिना च तथा(७) बृहत(ख)श्चैव वै पतिः(८) ।
कास्मिंचित्(९) केचिदित्याहुर्निपाताः(ग) स्तुतिषु स्तुताः(१०) ॥३॥

---

(१) द्वौ इति ख० ग० ङ० ।
(२) शाकटायन इति क० घ० ।
(३) यस्येति ख० ।
(४) सङ्ख्यायामिति क० घ० ।
(५) त्रिनव इति दन्त्यनकारयुक्तपाठो विशुद्धः ।
(६) संस्कृतः इति क० घ० ।
(७) स बृहस्पतिना चैव इति ख०, बृहतस्पतिना चैवेति ग० ङ० ।
(८) नाम्ना यस्यापि पर्वतः(घ) इति ख० ग० ङ० पुस्तकान्तरेषु ।
(९) कश्चित्तु इति क० घ० ।
(१०) निपाताः स्तुतिषु स्तुताः इति क० घ० ।

---

(क) ऋ० १, ८, १० । (ख) ऋ० १, १३०, ९ । (ग) ऋ० ४,५५,३ ।
(घ) ऋ० १, ३७, ७ ।

मित्र(क)श्च(१) स्तूयते(२)देवो वरुणेन सहा:(३)(ख)सहन् ।
रुद्रेण सोमः पूष्णा(४) च पुनः पूषा च वायुना ॥४॥
वातेनैव तु(५) पर्जन्यो स्तूयते वै क्वचित्(६) क्वचित् ।
ऋच(ग)र्द्धर्चेषु(७) पादेषु सूक्तेष्वेषु तु(८) सर्वशः ॥५॥
रथादानं(९) तु कर्म्मास्य वृत्रस्य(१०)(घ) च निवर्हणं ।
स्तुतेः प्रभुत्वं सर्वस्य बलस्य(ङ) निखिला कृतिः ॥६॥
इत्यैन्द्रो मध्यमस्थानो गणः सम्यगुदाहृतः ।
यः परस्तु(११)गणः सौर्य्यो द्युस्थानस्तं निबोधत ॥७॥

---

(१) तु इति ख० ङ० पुस्तकान्तरञ्च ।
(२) श्रूयते इति ग० ङ० पुस्तकान्तरञ्च ।
(३) सर्व्वेषु आदर्शपुस्तकेषु, सहा इति निर्व्विसर्गपाठो वर्त्तते ।
(४) पूषा इति ख० ।
(५) चैव इति ख० ङ० । चेति ग० ।
(६) अन्यत्र वै इति ग० ङ० पुस्तकान्तरञ्च ।
(७) अर्द्धर्चेषु इति क० घ०, ऋद्धवर्द्धेषु इति ख०, ऋद्धावर्द्धर्चेषु इति ग० ।
(८) सूक्तेष्वेव त्विति क० घ०, सूक्तेष्वेतेषु इति पुस्तकान्तरं ।
(९) रथदानमिति क० घ० ।
(१०) वृत्रस्येति क० घ० ।
(११) यस्य यत्तु इति क० ।

---

(क) ऋ० १, २२, ६ । (ख) ऋ० ८, २०, २० । (ग) ऋ० ५,५६,३ । (घ) ऋ० १, ३२, १० । (ङ) ऋ० १, ३७, १२ ।

तस्य मुख्यतमौ देवावश्विनौ[1]सूर्य्यमाश्रितौ ।
वृषाकपायि[2][क] सूर्य्या[ख]षाः[ग] सूर्य्यस्यैव तु पत्नयः[3] ॥८॥
अमुतोर्वाङ्[4]निवर्त्तन्ते प्रतिलोमास्तदाश्रयाः[5] ।
पुरोदया[6]त्तासुषसं सूर्य्यां मध्यन्दिने स्थिते ॥९॥
वृषाकपायिं[1] सूर्य्यास्तकाले चाहुः[7] स्तुतिष्वृषि[8] ।
तस्या[9]श्चये[10]मरण्यूस्व[घ][11] भगः[ङ] पूषा वृषाकपिः[च][12] ॥१०॥

---

(१) त्वश्विनौ इति क० घ० ।
(२) सर्व्वेषु चादर्शपुस्तकेषु वृषाकपायी इति दीर्घस्वरान्तपाठो वर्त्तते ।
(३) पत्नय इति क०, यत्नतः इति ख० ।
(४) अमुतोर्वागिति ङ० पुस्तकान्तरञ्च । अमुतो वागितिपाठः शुद्धः ।
(५) प्रतीलोदये इति क० घ० ।
(६) पुरोदये इति क० घ० ।
(७) सूर्य्यस्य तामेवाहुरिति क० घ०, सूर्य्यस्य त्वामेवाहुरिति ख० ।
(८) तु निम्नुचि इति क०, निमुचि इति ख० ।
(९) यस्येति क० घ० ।
(१०) चाश्रमे इति ग० ।
(११) तस्यापुस्त्वेति ख० ।
(१२) बृहस्पतिरिति ख० ।

---

(क) ऋ० १०, ८६, १३ । (ख) ऋ० ५, ७३, ५ । (ग) ऋ० १, ४६, १ ।
(घ) ऋ० १०, १७, २ । (ङ) ऋ० १, २४, ४ । (च) ऋ० १०, ८६, १ ।

यमो वैश्वानरो[क] विष्णुर्वरुणश्चैकपादजः[१] ।
पृथिवी च समुद्राश्च देवाः सप्तर्षयश्च ये ॥११॥
आदित्याः केशिसाध्याश्च सविता[२] वसुभिर्मनुः ।
दध्यङ्[ख]ङथर्वा[ग] विश्वे[घ] च वाजिनो[ङ][३]देवपत्नयः ॥१२॥
असौ तृतीयं सवनं[४] लोकः साम च[५] रैवतं ।
वैरूपश्चैव वर्षाश्च[६] शिशिरोऽथ ऋतुस्तथा[७] ॥१३॥
त्रयस्त्रिंशश्च[८]यः स्तोमः[च][९] कृपा सप्तदशश्च यः ।
छन्दश्च जगतीनाम्ना[१०] तथाऽतिच्छन्दसश्च[११]याः[१२] ॥१४॥

---

(१) अथ पादजः इति क० घ० ।
(२) आदित्यपूम साध्याश्च साङ्कश्चेति क० घ० ।
(३) वाजिनौ इति ख० ।
(४) तृतीयसवनमिति क० घ० ।
(५) तृतीयं सर्वेन सोमसामा चेति ख० ।
(६) वैरूप्यश्चैव सर्वाश्चेति ख० ।
(७) शिशिरश्चैव यावत् इति क० घ० ।
(८) त्रयस्त्रियश्चेति ख० ।
(९) यत् स्तोमं इति क०घ० ।
(१०) चैवेति क० घ० ।
(११) अतिश्छन्दसाश्चेति ग०, अतिच्छन्दसाश्चेति क० ख० घ० ।
(१२) यदिति क० घ० ।

---

(क) ऋ० १, ५६, ६ । (ख) ऋ० १, ८०, १६ । (ग) ऋ० १, ८०, १६ । (घ) ऋ० १, ३, ७-६ । (ङ) ऋ० १, ११, २ । (च) ऋ० १, ८, १० ।

पौरुषश्चाऊरस्यैतत्सर्वमेव तु[1] पौरुषं ।
एतस्यैव तु विज्ञेया देवाः संतविका[2]स्त्रयः[3] ॥१५॥
चन्द्रमाश्चैव वायुश्च पञ्चमं वत्सरं[4] विदुः ।
केचित्तु निर्वपत्य[5]स्य सौर्य्यं वैश्वानरं हविः ॥१६॥
सौर्य्यवैश्वानरीयं हि तत् सूक्तमिव[6]दृश्यते ।
ऋगर्द्धर्चोऽथ[7]वा पादो तृचो वा यदि वा द्व्यचः ॥१७॥
अनेन तु प्रवादेन[8] दृष्टा मूर्द्धन्वताश्रुतिः ।
सूर्य्यवैश्वानराग्नीना[9] मैकात्म्यमिह दृश्यते ॥१८॥
हरणं तु रसस्यैतत्कर्मणाऽमुत्र[10]रश्मिभिः ।
यानीमानि च पश्यन्ति सर्वभूतानि तेजसा[11] ॥१९॥

---

(१) चेति ख० ।
(२) संतापिकाः इति क० घ० ।
(३) त्रये इति ख० ।
(४) यच्च संवत्सरमिति क० घ०, पञ्चसंवत्सरमिति ख० ।
(५) निर्व्वपते चेति क० घ० ।
(६) न सूक्तमिहेति क० घ० ।
(७) ऋगर्द्धर्चश्चेति क० घ०, ऋगवर्द्धर्चार्थेति ख० ।
(८) प्रयोगेणेति क० घ०, प्रपादेनेति ख० ।
(९) सौर्य्यवैश्वानराग्नीनामिति क० ख० घ० पुस्तकान्तरञ्च।
(१०) रश्मिभिश्चास्य कर्म्माऽमुत्र चेति ग० ङ० पुस्तकान्तरञ्च।
(११) येन नातिविजानन्ति सर्व्वभूतानि चक्षुषेति ख० ग० ङ० पुस्तकान्तरञ्च ।

विभागमिममेतेषां विभूतिस्थानसम्भवं।
सम्यग्विज्ञाय[१]मन्त्रेषु तन्तु[२]कर्मसु योजयेत् ॥२०॥
अध्यापयन्नधीयानो मन्त्रां[३]श्चैवानुकीर्तयन्।
स्थानं सालोक्यं सायुज्यमेतेषामधिगच्छति[४] ॥२१॥
अग्नेस्तु यानि सूक्तानि[५] पञ्च नामानि कारवः[क]।
षड्विंशतिस्तथेन्द्रस्य प्राहुः सूर्यस्य सप्त च ॥२२॥
तेषां पृथग्निर्वचनमेकैकस्येह कर्मजं।
उच्यमानं यथान्यायं शृणुध्वमखिलं मया ॥२३॥
जातो यदग्रे भूतानामग्रणीरध्वरे च यत्।
नाम्ना सन्नयते वाङ्गं[६] स्तुतोऽग्निरिति[७]सूरिभिः[ख] ॥२४॥
द्रविणं[ग] धनं बलं वापि प्रायच्छ्येन[८] कर्मणा।

---

(१) विजानन्निति क॰ घ॰।
(२) तांश्चेति क॰ घ॰।
(३) तास्तु इति क॰ घ॰।
(४) एव गच्छतीति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु।
(५) सूक्तेषु इति क॰ घ॰।
(६) सन्तिष्ठते चाग्रे इति क॰ घ॰।
(७) इत्येति क॰ घ॰।
(८) चैव प्रयच्छेद्येनेति क॰ घ॰।

---

(क) ऋ॰ १, ११, ६। (ख) ऋ॰ १,११,१५। (ग) ऋ॰ १,९४,१४।

तत्कर्म दृष्ट्वा[१]कुत्स[क]स्तु प्राहैनं द्रविणोदसं[ख] ॥२५॥
अयं तनूनपाद्[ग]ग्निरसौ हि तननात्तनुः[२][घ]।
ततस्तु मध्यमो यज्ञे स्थानेऽयं[३] मध्यमात्ततः[४] ॥२६॥
अनन्तरं[५] प्रजामाङ्गर्नपा[ङ]दिति रूपश्रवः।
नपादमुष्य[६]चैवायमग्निस्तेन तनूनपात् ॥२७॥
पृथक्त्वेन समस्तेन[७] यज्ञे यच्छास्यते[८] नृभिः।
स्तवन्त्यामीषु तेनेमं नराशंस[च]न्तु कारवः[९][छ] ॥२८॥
पुनाति[१०] यदिदं विश्वमेवाग्निः[११] पार्थिवोऽथ च[१२]।

(१) ज्ञात्वेति क० घ०।
(२) तपसा तनूरिति क० घ०।
(३) स्थानेऽयमिति ख०।
(४) यज्ञे यश्चैव मध्यमादिति क० घ०।
(५) अनन्तरामिति ङ० पुस्तकान्तरञ्च।
(६) अमुष्येति ख०।
(७) समासैस्त्विति ख० ग० ङ० पुस्तकान्तरञ्च।
(८) वाश्यते इति क० ख०।
(९) सूरयः इति क० घ०।
(१०) जानाति इति ख०।
(११) विश्वमेवाग्निरिति ख०।
(१२) पार्थिवोऽप्यचेति ख०।

(क) ऋ० १, १०६, ६। (ख) ऋ० ६, ८८, ३। (ग) १, १८८, २। (घ) ऋ० १, १२०, ११। (ङ) ऋ० १, १४२, १। (च) ऋ० १, १३, ३। (छ) ऋ० १, ११, ६।

वैखानसर्षिभि[१] स्तेन पवमान[क] इति स्तुतः[२] ॥२८॥
भूतानि वेदयज्जातो जातवेदाऽथ[ख]कथ्यते[३] ।
यद्वैव[४]जातविद्यो[५]ऽभूदित्त्वा[६]जातोऽधिवेत्ति[७] वा ॥३०॥
विद्यते सर्वभूतैर्हि[८] यद्वा जात.[९] पुनः पुनः ।
तेनैव मध्यभागिन्द्रो[ग][१०] जातवेदा इति स्तुत ॥३१॥
पुनाति यदिदं विश्वं द्योपोऽग्निः[घ] पार्थिवोऽप्यमन् ।
वैखानसाग्नितैस्तस्मात्पवमान इति स्तुत.[११] ॥३२॥

---

(१) वैखानस ऋषिरिति ख० ।
(२) पुनातीत्यादि पवमान इति स्तुत इत्यन्तपाठ क० घ० पुस्तकयो र्नास्ति ।
(३) जातवेदाऽथ विद्यते इति क० घ० ।
(४) यद्वैव इति क० घ० ।
(५) जात वेद इति क० घ० पुस्तकान्तरयं ।
(६) वित्तमिति ख० ग० ङ० ।
(७) ऽथ वेत्तीति क० घ० ।
(८) सर्व्वमेतर्द्धीति क० घ० ।
(९) जातामिति क० घ० ।
(१०) मध्यभागेन्द्र इति ख० ग० ।
(११) एष श्लोक ख० ग० ङ० पुस्तकेषु पुस्तकान्तरे च न विद्यते ।

---

(क) ऋ० ८, १०१, १४ । (ख) ऋ० १, ७७, १ । (ग) ऋ० १, २, ३ । (घ) ऋ० १, १, २ ।

अग्निष्ठ एष(१) यत्तु चीन्(२)व्याप्यैको व्योम्नि तिष्ठति ।
तेनैनमृषयोऽर्चन्त.(३) कर्मणा वायु(क)मब्रुवन् ॥२३॥
चीर्णीमान्याद्दणोत्येको(४)मूर्त्तेन तु रसेन यत् ।
तयैनं वरुणं(ख) प्राह्या स्तुतिष्वाहुः कपण्वन:(५) ॥२४॥
अरोदीद(६)न्तरिक्षे यद्विद्युद्वृष्टिं ददन्नृणां(७) ।
चतुर्भिर्ऋषिभिस्तेन रुद्र(ग) इत्यभिसंस्तुतः(८) ॥२५॥
चतुर्विधानां भूतानां प्राणो भूत्वा व्यवस्थितः ।
इष्टे चैवास्य सर्व्वस्य तेनेन्द्र इति स स्तुतः(९) ।२६॥
इरां(घ) दृणाति(१०) यत्काले मरुद्भिः सहितोऽम्बरे ।

---

(१) अनिरुयैषेति क० घ० ।
(२) यत्तन्वा इति क०, यत्तु चीनिति ख० ङ०, यन्तन्या इति घ० ।
(३) अर्चन्ते इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(४) चीर्णिमाणाद्दणोत्येकामिति क० घ० ।
(५) तु कारव. इति क० घ० ।
(६) रोदस्यग्निति क० घ० ।
(७) विद्युद्वृष्टिरदान्नृणामिति क० घ० ।
(८) अभिधीयते इति क० घ० ।
(९) एष श्लोक. क० घ० पुस्तकयोर्नास्ति ।
(१०) इरा ददातीति क० घ० ।

---

(क) ऋ० ५, ४१, ६ । (ख) ऋ० १, ८, ७ । (ग) ऋ० १, ४३, ३ ।
(घ) ऋ० ५, ८३, ४ ।

रवेण महता युक्तस्तेनेन्द्रमृषयोऽब्रुवन् ॥३७॥
यदिमां प्रार्जयत्ये(१)को रवेनाम्बरजेन गां ।
कालेऽचिरैर्वंप्रस्वर्यो(२)तेन पर्जन्य(क)माहतुः ॥३८॥
तर्पयत्येष यल्लोकान् जन्यो जनहितश्च यत् ।
परो(३)जेता जनयिता यद्वाचेयस्तुतो(४)जगौ(५) ॥३९॥
बृहन्तौ पाति यल्लोकावेष द्वौ मध्यमोत्तमौ ।
बृहता(६)कर्म्मणा तेन(७) बृहस्पति(ख) रितीडित(८) ॥४०॥
ब्रह्म वाक् ब्रह्म सत्यञ्च ब्रह्म सर्व्वमिदं जगत् ।
पातार ब्रह्मणस्तेन ब्रौमहोच स्तुवन् जगौ ॥४१॥
चपो(ग)(९) चितिभ्यो विदधद्दतुश्चविशत् चितौ(१०) ।

---

(१) प्राजयतीति क० घ० ।
(२) सार्वी इति क० घ० ।
(३) पुर इति ख० ।
(४) पाश्रेयस्तुत इति ख० ग० ।
(५) एष श्लोक क० घ० पुस्तकयोर्न दृश्यते ।
(६) बृहन्तीति ख० ।
(७) यैवेति क० घ० ।
(८) बृहतश्चैव वै पतिरिति क० घ० ।
(९) ध्वन्तमिति ग० ।
(१०) ब्रह्मवागित्यादि चविशत् चितौ इत्यन्तपाठ क० घ० पुस्तकयोर्न दृश्यते ।

---

(क) ऋ० ५, ५३, ६ । (ख) ऋ० १, ६२, ३ । (ग) ऋ० ६, ४८, ७ ।

दधाति यदि सङ्ख्ये वृतावम्बरज पुन[१] ।
तेनैनमाह चेत्रस्य वामदेव[क][२]स्तुवन् यति ॥४२॥
मनसेमन्तु य दृश्य[३] मध्यम लोकमाश्रित ।
प्रमत्[ख] सत्येन सत्ये[ग] वै स[४] एष स्तुतवानृत[५][घ] ॥४३॥
रवेणान्तरसे चित्ते[६]स्थितो व्योमन्येष मायया ।
ऋतस्य श्लोक[ङ] इत्येष पुनस्तेन ततोऽब्रवीत् ॥४४॥
वास्तु[च] प्रयच्छलोकस्य मध्यमस्य तु पाति यत्[७] ।
तेन वास्तोष्पति माह चतुर्भिरिममीर्वंश ॥४५॥
वाचा वेदा ह्यधीयन्ते वाचा च्छन्दांसि सच च ।
अथो[छ] वाक् सर्व्वमेवेद तेन वाचस्पति स्तुत[८] ॥४६॥

---

(१) एतच्छ्लोकार्द्ध ग॰ ङ॰ पुस्तकयोर्न विद्यते ।
(२) यावादेवेति क॰ घ॰ ।
(३) मनसेममिम दृश्यमिति क॰ घ॰, मनसेय वृभादृश्यमिति ख॰, मनसेमन्तु यद्दृश्यमिति ग॰ ।
(४) य इति ङ॰ पुस्तकान्तरञ्च ।
(५) ऋषिरिति क॰ घ॰ ।
(६) रत्न चित्तौ रवेर्यत्तौ इति क॰ घ॰ ।
(७) पातित इति क॰ घ॰ ।
(८) वाचा वेदा ह्यधीयन्ते इत्यादि तेन वाचस्पति स्तुत इत्यन्त क॰ घ॰, पुस्तकयोर्न विद्यते ।

---

(क) ऋ॰ ४, २६, १८ । (ख) ऋ॰ ६, २३, ५ । (ग) ऋ॰ ८, १०८, ६ ।
(घ) ऋ॰ १, ४१, ४ । (ङ) ऋ॰ १, १६०, ४ । (च) ऋ॰ ८, १५, ५ ।
(छ) ऋ॰ १, २८, ६ ।

न कुत[१]श्चैव[२] यद्दीनो वृत्वा[क] तिष्ठति मध्यमः ।
राहूगण ऋषिस्तेन प्राहैनं गौतमो[३] दिति[ख] ॥४७॥
प्रजाभ्यस्त्वेष यच्छन्न एष वीरः शिवः सुखः[४] ।
हिरण्यगर्भं[ग] स्तेनैनमृषिरर्चतु[५]वाचकम् ॥४८॥
इह प्रजाः प्रयच्छेति[६] सङ्गृहीता[७] प्रयाति[८] च ।
ऋषिर्विवस्वतः पुत्रं तेनाहैनं पुन[९] र्यमं[घ] ॥४९॥
मित्रीकृत्य जना विश्वे यदिमं[१०] पर्य्युपासते ।
मित्र[ङ] इत्याह तेनैनं विश्वामित्रः[च] स्तुवन् स्वयम् ॥५०॥
निदाघमासातिगमे यद्वृते भावति चितिम्[११] ।

---

(१) नकुत इति ख॰, न कुतः इति ग॰ ।
(२) एष इति क॰ घ॰ ।
(३) गोतम इति क॰ घ॰ ।
(४) प्रजाभ्यस्त्वेष यच्छन्मकमिच्छन्मनवा सखम् इति ख॰ ग॰ ।
(५) एव लिति ख॰, इच्छनु इति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(६) प्रयच्छन् स इति ख॰ ग॰, नियच्छद्भिरिति क॰ घ॰ ।
(७) सङ्गृहीत्वेति ग॰ ङ॰, पुस्तकान्तरञ्च ।
(८) सङ्गृहीताह याति इति घ॰ ।
(९) यमः इति क॰ घ॰ ।
(१०) मैत्रं ह्यन्यैर्जना विश्वे यदेते इति क॰ घ॰, यदिमे इति ख॰ ।
(११) यदि सेनावनीद्विवमिति क॰ घ॰, यदतेषा च निद्याति इति ख॰।

---

(क) ऋ॰ १०, ६०, १ । (ख) ऋ॰ ४, २, ११ । (ग) ऋ॰ १०, १२१, १ ।
(घ) ऋ॰ १, ७३, १० । (ङ) ऋ॰ १, २३, ६ । (च) ऋ॰ ३, ५९, ६ ।

विश्वस्य जनयन् कर्म्म विश्वकर्म्मै(क)व तेन सः(१) ॥५१॥
सरांसि द्युतवन्त्यस्य सन्ति लोकेषु यत्त्रिषु।
सरस्वन्त(ख)मिति प्राह वाचं प्राहुः सरस्वतीम्(ग)(२) ॥५२॥
प्राणभूतस्तु भूतेषु यद्वितत्येह(३) तिष्ठति।
तेनैनं वेन(घ)माहर्षिर्वेनो(ङ)नामेह(४) भार्गवः ॥५३॥
सहजे मासि मासेनमभिमत्य(५)ततो भजन्(६)।
तेनैनं मन्यु(च)रित्याह मन्युरेव तु तापसः ॥५४॥
यदन्तकाले भूतानामेक(७) एव नयत्यसून्।
तेनासुनीति(छ)रक्तोऽयं सुवता सुतबन्धुना ॥५५॥
निदाघमासातिगमे जन्म मध्ये भवत्यपां(८)।
नप्तार(ज)माह तेनैनमृषिर्वत्समदः(झ)सुवन्(९) ॥५६॥

---

(१) त्विति क० घ०।
(२) इतीमन्तु मूलो दीर्घतमौर्वशौ इति क० घ०।
(३) यद्वेनत्येष्विति ग०, यद्वेनतेन्द्रिति ङ० पुस्तकान्तरञ्च।
(४) चाह्वार्थेन् वेनोऽन्यमेर्हेति क० घ०।
(५) अभिवत्येति ख०, अभिमत्येति ग०।
(६) मासि मासोमामभिवत्य तपोऽयमः इति क० घ०।
(७) एष इति क० घ०।
(८) मध्येऽस्य यत्त्वपामिति क० घ०।
(९) त्वपामिति क० घ०।

---

(क) ऋ० ८, ६८, २। (ख) ऋ० १, १६४, ५२। (ग) ऋ० ६, ६१, २।
(घ) ऋ० ६, २१, ५। (ङ) ऋ० १, ८३, ५। (च) ऋ० २, २४, १४।
(छ) ऋ० १०, ५९, ५। (ज) ऋ० २, ३१, ६४। (झ) ऋ० २, १९, ८।

अपा(१)मम्बरगर्भौघमादधत्(२)सोऽष्टमासिकम् ।
यत्क्रन्दत्य(३) न्तरमध्ये दधिक्रेति तदोच्यते(४) ॥ ५७ ॥
मासेन सम्भृतं गर्भं नवमेनाथ मासिकम्(५) ।
स्वयं क्रन्दन् दधात्युर्व्यां धातेत्यृग्भिः स(६) गीयते ॥ ५८ ॥
तीर्णोऽन्तरिक्षे क्षिपति यदा तूर्णं चरत्यसौ(७) ।
अरिष्टनेमिस्तार्क्ष्य(क)र्षिस्तार्क्ष्यं तेनैन(८)मुक्तवान् ॥ ५९ ॥
रुवन्(ख) व्योम्नुदयं याति घ्नन् भा(९)दिस्त्जमपः ।
पुरूरवस(ग)माहैनं स्ववाक्येनोरु(घ)वासिनी(१०) ॥ ६० ॥

---

(१) अब्ध्यामिति क० घ० ।
(२) आहरदिति क० घ० ।
(३) यत्क्रन्दते इति क० घ० ।
(४) दधिक्राख्येन कथ्यते इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(५) अष्टमासिकमिति क० घ० ।
(६) तु इति क० घ० ।
(७) तूर्णं क्षियं यत्ससखा यदियातीह धन्विनीति क० घ०, तूर्णं क्षिप्रत्वसससखो यदियति पश्यतीति ख०, करोत्यसौ इति ङ० पुस्तकान्तरञ्च ।
(८) एवमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) घ्नन्तभादिति ग० ।
(१०) स्ववाक्यैरुवाभिमीति क० घ० ।

---

(क) ऋ० १, ८९, ६ । (ख) ऋ० १, १७३, ८ । (ग) ऋ० १, ३१, ४ ।
(घ) ऋ० १०, ९५, ७ ।

यत्तु प्राच्या वयं नेति[१] घोषेण महता रतः[२] ।
येमं क्षितिभ्यो विदधदयत्तुभ्यविशत् क्षितौ[३] ॥ ६१ ॥
तेन मृत्युमिमं मन्त्रं स्तौति मृत्युरिति स्वयं[४] ।
नाम्ना सङ्कुसुको[५] नाम यमपुत्त्रो जघन्यजः[६] ॥ ६२ ॥
संवर्त्तयंस्तमः सूर्य्यां[७] दुयसच्च प्रवर्त्तयन् ।
दिवाकरः प्रसौत्येकः[८] सविता तेन कर्म्मणा ॥ ६३ ॥
उदितो भासयल्लोका[९] निर्मांश्चैव स्वरश्मिभिः[१०] ।
स्वयं वसिष्ठस्तेनैनमृषिराह स्तुवन् भगम्[११][क] ॥ ६४ ॥

---

(१) नैतीति क० घ० ।
(२) मृधे इति क०, मृतः इति ख०, मृधमिति घ० ।
(३) एतच्छ्लोकार्द्धं ग० ङ० पुस्तकयोर्नास्ति । यस्यक्षितिभ्यो विरमत् यत्तु+व्यविशा क्षितौ इति ख०, यविवक्षितौ इति क० घ० ।
(४) इतीश्वरमिति क० घ० ।
(५) सङ्कुसुमः इति क० ।
(६) जघन्यसः इति ख०, जघन्यकः इति ङ० ।
(७) स्वं वर्त्तयंस्तमो सूपौ इति क० घ०, संवर्त्तयं तमः सूर्य्यादिति ख० ग० ङ० ।
(८) दिवा चरन् प्रसूत्यैकः इति क० घ० ।
(९) भाति यल्लोकानिति क० घ० ।
(१०) चैकश्च रश्मिभिरिति ख० ङ० पुस्तकान्तरञ्च ।
(११) स्तुवन्नगमिति ग० ।

---

(क) ऋ० १,१४,३।

पुष्यन् चितिं[१] पोषयति प्रणुदन् रश्मिभिस्तमः[२] ।
तेनैनमस्तौत् पूषेति भरद्वाजस्तु पञ्चभिः ॥ ६५ ॥
त्रीणि भान्ति रजांस्यस्य यत्पदानि तु तेजसा[३] ।
तेन मेधातिथिः प्राह विष्णु[क]मेनं[४] त्रिविक्रमम् ॥ ६६ ॥
हत्वा यायं पृथग्याति[५] भूतेभ्यस्तमसोऽत्यये ।
प्रकाशं किरणैः कुर्वंस्तेनैनं केशिनं[ख] विदुः ॥ ६७ ॥
समेत्यैकैकशस्त्वेनं[६] यन्मन्यन्ते पृथङ्नराः ।
विश्वे[ग] विश्वानर[७][घ] स्तेन कर्मणा स्तुतिषु स्तुतः ॥ ६८ ॥
वृषे[८]व कपिलो[ङ][च] भूत्वा यन्नाकमधिरोहति ।
वृषाकपि[छ]रसौ तेन विश्वस्मादिन्द्र उत्तरः[ज]।
रश्मिभिः कम्पयन्नेति वृषा वर्षिष्ठ[झ] एव सः ॥६९॥

---

(१) उद्यन् जगदिति क० घ० ।
(२) ततः इति ख० ।
(३) तेजसः इति क० घ० ।
(४) एतमिति क० ख० घ० ङ० ।
(५) सौर्ये पृथक् तेऽमी इति क० घ० ।
(६) मां प्रत्येकैकशस्त्वेवेति क० घ० ।
(७) वैश्वानरः (ञ) इति क० घ० ।
(८) वृषेभ कपिल इति क० घ०, वृषैककपिल इति ख० ग० ।

---

(क) ऋ० ३, ५४, १४ । (ख) ऋ० १, १०, ३ । (ग) ऋ० १, ३, ७–९ ।
(घ) ऋ० १, १८६, १ । (ङ) ऋ० १, ५९, ६ । (च) ऋ० १, ७, ८ ।
(छ) ऋ० १०, ८६, १६ । (ज) ऋ० १०, ८६, १ । (झ) ऋ० ४, १८, ९ ।
(ञ) ऋ० १, ३७, ६ ।

सायाह्नकाले भूतानि स्वापयन्नस्तमेति यत् ।
वृषाकपि(क)रितो(१) वा स्यादिति मन्त्रेषु दृश्यते ॥ ७० ॥
त्रिषु धन्वे(ख)ति(२) चेन्द्रेण प्रत्युक्तो वारिषाकपे(३) ।
विष्णातेर्विशतेर्वा स्याद्वेवेष्टेर्व्याप्तिकर्म्मणः ।
विष्णुर्निरुच्यते वात सर्वं सर्वान्तरस्य स(४) ॥ ७१ ॥
पञ्च षड्विंशतिश्चैव यानि नामानि सप्त च ।
मन्त्यगन्नीन्द्रसूर्य्याणां तान्युक्तानि यथाक्रमम् ॥ ७२ ॥
नैपातिकानां नाम्नां तु प्रागुक्तेर्नामलक्षणे ।
सम्पन्नानां पृथक्त्वेन परिसङ्ख्या न विद्यते ॥ ७३ ॥
पार्थिवी(ग) मध्यमा(घ) दिव्या वागपि त्रिविधा तु या ।
तस्याः सूक्तानि नामानि यथास्थानं निबोधत ॥ ७४ ॥
कृत्स्नन्तु भजते सूक्तमेता(५)नद्य स्तुता(६)भुवि ।

---

(१) व्यतः इति पुस्तकान्तरं ।
(२) धान्वेतीति ग० त्रिषु धन्वेतीति ङ० ।
(३) वृषाकपे(ङ) इति ख० ।
(४) रश्मिभि आप्याययतीत्यादि सर्वं सर्वान्तरस्य स [illegible] क० घ० पुस्तकयोर्नेष्यते ।
(५) ह्येषा इति क० घ०, एषा इति ट० ङ० ।
(६) तदेति क० घ० ।

---

(क) ऋ० १०, २७, ११ । (ख) ऋ० [illegible] । (ग) ऋ० [illegible] २५, ६ । (घ) ऋ० ६, २४, ६ । (ङ) ऋ० [illegible]

यं वै वैनं[१] भजन्त्यापो[२] यदा[३] चौषधयः सदा[४] ॥ ७५ ॥
अरण्यानी[क] च रात्री[ख] च अद्धा[ग] घोषाः[५][घ] सरस्वती ।
पृथिवी चैव नामैषा भूला[ङ]द्या च भजन्ति च[६] ॥ ७६ ॥
अग्नायी[च] नामतोऽप्येषा[७] भूलाग्नेयेषु[८] केषुचित् ।
स्तुता निपात[छ]मात्रेण तत्र तत्रेह दृश्यते ॥ ७७ ॥
मध्ये सत्यदिति[ज]र्वाक्च[९] भूला चैषा सरस्वती ।
समयं भजते सूक्त त्रिभिरेव तु नामभिः ॥ ७८ ॥
एषैव दुर्गा भूलर्च[झ] छन्ना[१०] स्यात् सूक्तभागिनी[११] ।

---

(१) यदा चैनमिति क० ख० घ०, यच वैनमिति ग० ।
(२) भवन्त्याप इति ख० ।
(३) तदेति क० घ० ।
(४) तयेति क० घ० ।
(५) चैवेति क० ख० घ० ।
(६) भूत्वा या भजते स्तृचीति क०, याभजते स्तृचीति घ० ।
(७) अग्नायीणा च नामैषेति क० घ० ।
(८) भूलाग्नेयीष्विति क० घ० ।
(९) वाक्यमिति क० घ०, मध्यसत्यदितिर्वांक्चेति ख० ।
(१०) छन्येति ङ० पुस्तकान्तरस्थ ।
(११) एषैव दुर्गा भूलर्चमिति श्लोकार्द्धं क० घ० पुस्तकयोर्न विद्यते ।

---

(क) ऋ० १०,१४६,४ । (ख) ऋ० १,११३,१ । (ग) ऋ० ७,९२,१४ ।
(घ) ऋ० १, ४६, १ । (ङ) ऋ० १०,१६९, ५ । (च) ऋ० ५, ४६, ८ ।
(छ) ऋ० ४, ५५, ३ । (ज) ऋ० १, ४३, २ । (झ) ऋ० ७, ६६, ११ ।

तन्नामानि च[१] मिन्द्राणी सरमा[क]रोमशो[ख]र्वशी[ग] ॥७९॥
भवत्यथा[घ]सिनीवाली[२][ङ] राका[च] चानुमतिः[३][छ] कुहूः।
गौर्धेनुर्देवपत्न्योऽग्न्या[४] यथा स्वस्त्यथ[५] रोदसी।
नैपातिकानि चत्वारि[६] येषां नामानि कानिचित् ॥८०॥
यदा तु वाग्भवत्येषा[७] सूर्याऽमुं लोकमाश्रिता।
तदा सूक्तमुखा[८][ज] भूत्वा सूर्या[झ] च भजतेऽखिलम् ।८१॥
वृषाकपाय्यृचं[ञ] भूत्वा सरण्यू[ट]र्हं च ते भुवम्[९]।

(१) सूक्तार्घानीयमिति क० घ०। सूक्तार्धाधीयमितिपाठो विशुद्धः।
(२) भवत्स्वथा(ठ)सिनीवालीति क० घ०, भवत्स्वन्या सिनीवालीति ख०, भवत्यथा सिनीवालीति ग०।
(३) राकोचानुमतिरिति क०, राकोचानुमितिरिति घ०, राका चानुमितिरिति पुस्तकान्तरम्।
(४) गोरीगौर्धेनुपत्न्योऽग्न्या इति क० घ०, देवपत्न्योऽग्ना इति ङ० पुस्तकान्तरञ्च।
(५) स्वस्ति चेति [illegible]०,स्वस्त्यिश्चेति ग० ङ० पुस्तकान्तरञ्च।
(६) नैपातिकान् पृथग्भाक्षीति क०।
(७) भजत्येवेति क० घ०।
(८) सूक्तमुखेति ख० ग०, तथा सूक्तमुखेति ङ० पुस्तकान्तरञ्च।
(९) त्वेव तदृचमिति क० घ०, ते भुवमिति पुस्तकान्तरम्।

(क) ऋ० १, ६२, ३। (ख) ऋ० १, १२६, ७। (ग) ऋ० ५, ४१, १९।
(घ) ऋ० ३, ५४, ५। (ङ) ऋ० ११, ३२, ८। (च) ऋ० ११, ३२, ८।
(छ) ऋ० १०, ५९, ६। (ज) ऋ० १, १८२, ६। (झ) 8, 88, १।
(ञ) ऋ० ७, ६६, ११। (ट) ऋ० १०, १७, २। (ठ) ऋ० ७,८७,४।

निपातमात्रं भजते द्यविन्न[१] पृथिवी सती ॥ ८२ ॥
सूर्य्यामिव[२] सतीमेतां गौरीं वाचं सरस्वतीम् ।
पश्यामो वैश्वदेवेषु निपातेनैव केवलाः[३] ॥ ८३ ॥
घोषा[क] गोधा[ख] विश्ववारा[ग] पालोपनिषवन्निषत्[४] ।
ब्रह्मजाया[घ] जुहू[ङ]र्नामागस्त्यस्य[५][च] स्वसाऽदितिः[छ] ॥ ८४ ॥
इन्द्राणी चेन्द्रमाता[६] च सरमा[ज] रोमशो[झ]र्वशी[ञ] ।
लोपामुद्रा[ट] च नद्यश्च यमी[ठ] नारी च शश्वती[७][ड] ॥ ८५ ॥
श्रीर्लक्ष्मीः सार्पराज्ञी[८] वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्य्या[ढ] च सावित्री ब्रह्मवादिन्य ईरिताः ॥ ८६ ॥

---

(१) द्यविन्नु इति क० घ०, द्युवचेति ग० ।
(२) पृथिवी त्विति क० घ० ।
(३) केवलामिति क० घ० ।
(४) पालोपनिषन्निषत् इति क० ख० घ० ङ० ।
(५) छन्दोऽनुरोधात् नाम चागस्त्यस्येति पाठः समीचीनः ।
(६) चन्द्रमातेति ख० ।
(७) शश्वतीति क० घ०, तथैव चेति ख० ।
(८) सार्व्वराज्ञेति ख० ।

---

(क) ऋ० १०, ४०, ५ । (ख) ऋ० ८, ६६, ९ । (ग) ऋ० १, ४, ३ ।
(घ) ऋ० १०, १०९, ३ । (ङ) ऋ० १, ५८, ४ । (च) १०, ६०, ६ ।
(छ) ऋ० १, ४१, २ । (ज) ऋ० १, ६२, ३ । (झ) ऋ० १, १२६, ७ ।
(ञ) ऋ० ५, ४२, १९ । (ट) ऋ० १, १७९, ४ । (ठ) ऋ० १०, १०, ९ ।
(ड) ८, १, ३४ । (ढ) ऋ० ४, ४४, १ ।

नवकः प्रथमस्त्वासां(१) वर्गं(२) स्तुष्टाव देवताः ।
ऋषिभिर्देवताभिश्च समूढे(३)मध्यमो गणः ॥ ८७ ॥
आत्मनो भाववृत्तानि जगौ वर्गस्तथोत्तमः ।
उत्तमस्य तु वर्गस्य य ऋषिः सैव(४) देवता(५) ॥ ८८ ॥
आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तमः(६) ।
तस्मादात्मस्तवेषु स्याद्य ऋषिः सैव(७) देवता ॥ ८९ ॥
संवादेष्वाह वाक्यं यः स तु तस्मिन् भवेदृषिः(८) ।
यस्तेनोच्येत वाक्येन देवता तत्र(९) सा भवेत् ॥ ९० ॥
उच्चावचेषु चार्थेषु निपाताः समुदाहृताः ।
कर्मोपग्रहणार्थे च(१०) क्वचिच्चौपम्यकारणात् ॥ ९१ ॥
ऊनानां पूरणार्थं वा(११) पादानामपरे क्वचित् ।

---

(१) तासामिति ख० ।
(२) वर्गाः इति क० घ० ।
(३) समूहे इति क०, समुद्रे इति ख० ।
(४) ऋषिश्चैव चेति घ० ।
(५) आत्मनो भाववृत्तानीत्यादि य ऋषिः सैव देवता इत्यन्तपाठः क० घ० पुस्तकयोर्न विद्यते ।
(६) देवता चोत्तमस्तु यः इति क० घ० ।
(७) आत्मस्तवेष्वेवं भवेदृष्टैवेति क० घ० ।
(८) भवत्यृषिरिति क० घ० ।
(९) तेष्विति क० घ० ।
(१०) कर्मोपग्रहणार्थेष्विति क० घ० ।
(११) पूरणार्थेष्विति क० घ० ।

मिताक्षरेषु ग्रन्थेषु पूरणार्थास्त्वनर्थकाः(१) ॥८२॥
कमीमिद्विति(२)विज्ञेया ये त्वनेकार्थकाश्च ते(३) ।
इव न चिच्चु चत्वार(४) उपमार्था भवन्त्यमी(५) ॥८३॥
उपमार्थे(६) नकारस्तु क्वचिदेव निपात्यते ।
मिताक्षरेषु ग्रन्थेषु प्रतिषेधस्त्वनेकशः(७) ॥८४॥
इयन्त(८) इति संख्यानं निपातानां न विद्यते ।
प्रयोजनवशा ह्येते(९) निपात्यन्ते पदे पदे ॥८५॥
उपसर्गास्तु विज्ञेयाः क्रियायोगेषु(१०) विंशतिः ।
विवेचयन्ति ते त्वर्थां(११)न्नामाख्यातविभक्तिभिः(१२) ॥८६॥

---

(१) पूरणार्थं त्वनर्थका इति क० घ० ।
(२) चामिमिद्वतीति ख० ।
(३) त्वन्ये त्वार्थकाः स्तुतौ इति क० घ० ।
(४) इवोनचिन्नुचत्वार इति ग० । इवेनचिन्नुचत्वार इति ङ० ।
(५) भवन्ति ते इति ख० ग० ङ० ।
(६) उपमार्थे इति ग० ङ० ।
(७) त्वनल्पशः इति ख० ग० ङ० ।
(८) इयन्तु इति ख० ।
(९) वशाद् प्रकरणस्यैते इति ग० ङ० । वशाः प्रकरणस्यैते इति ख० ।
(१०) क्रियायोगेनेति ख० ग० ङ० ।
(११) ते त्वर्थमिति ग० ङ० । ह्यर्थानिति घ० ।
(१२) विभक्तितः इति घ० । विभक्तिषु इति ख० ग० ङ० ।

(१)(अनु[क]अ[ख]दन्त[ग])रित्येतानाचार्य्यः शाकटायनः।
उपसर्गाः क्रियायोगान्मेने तेन त्रयोऽधिकाः ॥९७॥
त्रीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम्।
नामसूक्तप्रयोगेषु वाच्यं प्रकरणं तथा ॥९८॥
तेषान्तु नामभिर्लिङ्गैर्ग्रहणं सर्वनामभिः।
ज्ञाताज्ञातस्य सदृशो गृहीतस्य पुनर्ग्रहः ॥९९॥
पादसूक्तर्च्चवर्गार्धनामान्यन्यानि यानि च।
सर्वं नामानि सैवाङ्गल्ये चैवं यथा कथा ॥१००॥
प्रधानमर्थः शब्दो हि तद्गुणायत्त इष्यते।
तस्मान्नानान्वयोपायः शब्दानर्थवशं नयेत् ॥१०१॥
अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत्।
विप्रकृष्टस्य सन्दध्यादानुपूर्वीञ्च कल्पयेत् ॥१०२॥
लिङ्गं धातुं विभक्तिञ्च सन्नयेत् तत्र तत्र च।
यद्यत्स्याच्छान्दसं वाक्यं कुर्य्यात् तत्तत्तु लौकिकम् ॥१०३॥
यावतामेव धातूनां लिङ्गं रूढिगतं भवेत्।
अर्थश्चाप्यभिधेयश्च तावद्भिर्गुणविग्रहः ॥१०४॥
धातूपसर्गावयवगुणशब्दाद्द्विधातुजम्।
बह्वेकधातुजं वापि यदनिर्वाच्यलक्षणम् ॥१०५॥
धातुजं धातुजाज्जातं समस्तार्थजमेव वा।

(१) ९६ संख्यकश्लोकात् १२७ संख्यकश्लोकपर्यन्तं श्लोकाः क० घ० चिह्नितयोः पुस्तकयोर्नोपलभ्यन्ते। एते ख० ग० ङ० चिह्नितेषु पुस्तकेषूपलभ्यन्ते।

(क) ऋ० १, ६, ४। (ख) ऋ० १, ११, ५। (ग) ऋ० १, ५४, १।

वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥१०६॥
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥१०७॥
विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते ।
प्रविभज्यैव निर्ब्रूयाद्दण्डार्हो दण्ड्य इत्यपि ॥१०८॥
भार्य्या रूपवती चास्य रूपवद्भार्य्य इत्यपि ।
इन्द्रश्च सोमस्तेत्येवमिन्द्रासोमौ निदर्शनम् ॥१०९॥
शब्दरूपं पदार्थस्य व्युत्पत्तिः प्रकृतिर्गुणः ।
सर्वमेतदनेकार्थं दृश्यानवगमे गुणः ॥११०॥
सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित् ।
पलायने यथावृत्ति कौतुमर्या इतीष्यते ॥१११॥
विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित् ।
हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम् ॥११२॥
पदमेकं समादाय द्विधा कृत्वा निरुक्तवान् ।
पुरुषादः[क] पदं यास्को वृचे वृचे इति लृचि ॥११३॥
अनेकं सत्तया चान्यदेकमेव निरुक्तवान् ।
अरुणो मासकृन्मन्त्रे मासकृदिषयेण तु ॥११४॥
पदव्यवायेऽपि पदे एकीकृत्य निरुक्तवान् ।
गर्भे निधानमित्येते न जामय[ख] इति लृचि ॥११५॥
पदजातिरविज्ञाता त्वः पदार्थ सिनामनि ।

---

(क) ऋ० १०, २७, २२। (ख) ऋ० १,२२,१६।

स्वरानवगमो धायि[क] वनेनेत्यृचि दर्शितः ॥११६॥
शुनःशेफं[ख] नराशंसं[ग] ध्यायानः पृथिवीति च।
निरष्ठतेति प्रभृतिस्वर्थाद्रामीत् क्रमो यथा ॥११७॥
वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्य च।
प्रचाणीतिकपिर्नोभाद्[घ]नीयामित्यथास्तु च ॥११८॥
अर्थात् पदं स्वाभिधेयं पदाद्वाक्यार्थनिर्णयः।
पदसङ्घातजं वाक्यं वर्णसङ्घातजं पदम् ॥११९॥
अर्थात् प्रकरणाल्लिङ्गादौचित्याद्देशकालतः।
मन्त्रेष्वर्थविवेकः स्यादितरेष्विति च स्थितिः ॥१२०॥
इति नानाम्युपायैर्नैरुक्तो यतेत सः।
जिज्ञासुर्ब्रह्मणो रूपमपि दुष्कृत् परं ब्रजेत् ॥१२१॥
यथेदमग्रे नैवासीदसदप्यथ वापि सत्।
जज्ञे यथेदं सर्वं तद्भाववृत्तं वदन्ति तु ॥१२२॥
भावप्रधानमाख्यातं षड्विकारा भवन्ति ते।
जन्मास्तित्वं परीणामो वृद्धिर्ह्रासं विनाशनम् ॥१२३॥
एतेषामेव पयान्नु येऽन्ये भावविकारकाः।
ते यथावाक्यमप्यूह्याः सामर्थ्यान्मन्त्रविस्तरैः ॥१२४॥
देवानाञ्च पितॄणाञ्च नमस्कारैस्तथैव च।
अथ व्यस्तं समस्तं वा शृणु व्याहृतिदैवतम् ॥१२५॥
व्याहृतीनां समस्तानां दैवतन्तु प्रजापतिः।

---

(क) ऋ॰ १, १५८, ३। (ख) ऋ॰ ५, २, ७। (ग) ऋ॰ १, १३, ३।
(घ) ऋ॰ ८, ७, ६।

व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥१२६॥
वाग्दैवत्योऽथ वाय्वैन्द्रो यदि वा परमेष्ठिनः ।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा) ॥१२७॥
भावप्रधानमाख्यातं षट्प्रकारा भवन्ति तु ।
जन्मास्तित्वं परीणामो वृद्धिर्ह्रासो विनाशनम् ॥१२८॥
एतेषामेव वर्णाः स्युरन्ये भावविकारजाः ।
यथावचनमप्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२९॥
त्रीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम् ।
नामसूक्तप्रदेशेषु योज्यं प्रकरणं तत्तु ॥१३०॥
तेषां तु नामभिर्लिङ्गैर्ग्रहणं सर्वनामभिः ।
कुर्वन्नामानि वै वाऽन्यदेवत्यया यथा ॥१३१॥
यथेदमग्रे नैवासीदसदाप्यथवापि सत् ।
जज्ञे यथेदं सर्वं तु भाववृत्तं प्रपद्यते ॥१३२॥
वाग्देवत्योऽथ वाय्वैन्द्रो यदि वा परमेष्ठिनः ।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा ॥१३३॥
व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः ।
व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥१३४॥

इति शौनकाचार्यकृतौ बृहद्देवतायामुपोद्घातप्रकरणम् ।

---

आग्नेयं प्रथमं सूक्तं मधुच्छन्दस आदितः(१) ।
ज्ञेयास्त्वन्योऽन्यदेवत्या(२) स्तृचाः सप्तात उत्तराः ॥१२५॥
वायव्यः प्रथमस्तेषामैन्द्रवायव उत्तरः ।
मैत्रावरुण आश्विन्य(३) ऐन्द्रो यः पञ्चमस्तृचः(४) ॥१२६॥
(५)नान्यः षष्ठाद्विश्वलिङ्गो गायत्रोऽन्यस्तु यस्तृचः(६) ।
बहुदैवतमन्यत्तु(७) वैश्वदेवेषु शस्यते ॥१२७॥
सुषेदुवस्यो(८)आयाते(क) गोतमेऽथ ऋजिश्वनि(ख) ।
अवत्सारे(ग) परु(घ)च्छेपे(९) अत्रौ(१०) दीर्घतमस्यृ(ङ)षौ(११) ॥१२८॥

---

(१) आर्षकमिति ग० ङ० । घ० पुस्तकोद्धृतपाठश्च ।
(२) सर्वेऽन्यदेवत्या इति ग० ङ० । घ० ङ० ।
(३) मैत्रावरुणोऽथाश्विन इति ख० ग० ङ० । घ० ङ० ।
(४) त्विन्द्रोवो वैश्वदेवत इति ख० । अथैन्द्रोऽन्तो वैश्वदेवक इति ग० ङ० ।
(५) तन्नाम्ना विश्वलिङ्गो वेति ग० ङ० । घ० ङ० ।
(६) गायत्रोऽस्त्यपरस्तृचः इति क० ख० घ० ।
(७) बहुदेवतमन्यस्त्विति क० घ० । बहुदैवत्यमन्यस्त्विति ग० ।
(८) सुषेऽथ वास्ये इति ग० ङ० । घ० ङ० ।
(९) परुच्छेपे इति ग० । अवत्सारपरुच्छेपे इति ख० ।
(१०) पुत्रे इति ख० ग० ङ० । घ० ङ० ।
(११) तत् एषौ इति ख० ।

---

(क) ऋ० १, ५१, ७ । (ख) ऋ० ८, ४६, १० । (ग) ऋ० ५, ४४, १० ।
(घ) ऋ० १०, १००, ५ । (ङ) ऋ० १, १५८, ६ ।

वसिष्ठे नाभानेदिष्ठे(क) गये(ख) मेधातिथौ मनौ(ग)।
कक्षीवति(घ)[1] विहव्ये(ङ) च बह्वृग्वन्येषु चर्षिषु[2] ॥१३९॥
अगस्त्ये बृहदुक्थे(च) च विश्वामित्रे च[3] गाथिनि(छ)।
दृश्यन्ते विप्रवादास्तु[4] तांस्तु तासु स्तुतिष्विह ॥१४०॥
सर्वेषां सन्निपातस्तु यस्मिन्नर्धे प्रदृश्यते।
आचार्यौ यास्कशाकपूणी वैश्वदेवं तमाहतुः[5] ॥१४१॥
पादं वा यदि वार्धर्चमृचं वा सूक्तमेव वा।
वैश्वदेवं वदेत्सर्वं यत्किञ्चिद्बहुदैवतं[6] ॥१४२॥
ऋषिभिर्देवताः सर्वा विश्वाभिः स्तुतिभिः स्तुताः।
संज्ञा तु विश्वमित्यासां[7] सर्वासामत्र निपातिता[8] ॥१४३॥

---

(१) काक्षीवते इति ख०। कक्षीवते इति घ० ङ०।
(२) चर्षिषु इति ख० ग० ङ०। घ० ङ०।
(३) विश्वामित्रेऽपीति ख० ङ०। घ० ङ०।
(४) विप्रवादाश्चेति क० घ० च०।
(५) तदाहतुरिति ग० ङ०। घ० ङ०।
(६) बहुदैवतमिति क० च०।
(७) विश्वमित्येषेति ख० ग० ङ०। घ० ङ०।
(८) निपातितौ इति ङ०। घ० ङ०।

---

(क) ऋ० १०,६१,१८। (ख) ऋ० ६, २, ८। (ग) ऋ० १, ३६, १६।
(घ) ऋ० १, ५१, १३। (ङ) ऋ० १, १०८, ६। (च) ऋ० ४, २०, १०।
(छ) ऋ० १, ८, १।

सारस्वतः सप्तमस्तु[१] एताः प्रउगदेवताः[२] ।
अविद्यमान ऊने वा प्रउगेष्वत आवपेत्[३] ॥१४४॥
सरस्वती तु द्विविधा ऋक्षु सन्दृश्यते स्तुता[४] ।
नदीवद्देववच्चैव तयेवमुभयं स्मृतं[५] ॥१४५॥
[६]सुरूपकृत्नु[क]मित्यैन्द्रं सप्त चान्योऽन्यतः परं ।
यज्ञाद्ग[७] स्वधामिति मारुत्योऽनन्तरा ऋचः ॥१४६॥
एका वीळु[ख]चिदिन्द्रायं[८] मरुद्भिः सह गीयते ।

---

(१) सारस्वतस्तु सप्तम इति ग॰ ङ॰ । घ॰ ञ॰ ।

(२) सारस्वतस्तु उत्तरमप्टमा प्रउगदेवता इति ख॰ ।

(३) अविद्यमान इत्यादिश्लोकार्द्धं ख॰ ग॰ ङ॰ चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) ऋक्षु सर्वासु सा स्तुतेति ग॰ ङ॰ । घ॰ ञ॰ ।

(५) नदीवद्देवतावच्च सूक्ताचार्य्यस्तु शौनक इति ख॰ । अत्र सूक्ताचार्य्यं इति ग॰ ङ॰ । घ॰ ञ॰ ।

(६) इत पूर्वं ख॰ ग॰ ङ॰ । घ॰ ञ॰ चिह्नित पुस्तकेषु नदीवन्निगमा षट् ते सप्तमो नेत्युवाच ह । यस्मेकाच दृषद्वत्यां चिनइच सरस्वती । इयं शुष्मेभिरित्येतं मेने यास्कस्तु साप्तमम् । यथो सारस्वतस्यैता याज्या मैत्रायणीयके । प्राधान्याद्धविष पश्यन् वाच एवैतरेऽब्रवीत् । इत्यधिकं पठ्यते ।

(७) यज्ञादग इति ख॰ यज्ञादह इति घ॰ ।

(८) एकाविद्युर्चिमिन्द्रीयमिति क॰ । एकाविमुर्चिदिन्द्रायेति ख॰ । एकापीलुचिदिन्द्रायेति ग॰ । एकावालुचिदिन्द्रायेति ङ॰ ।

---

(क) ऋ॰ १, ४, १ । (ख) ऋ॰ १, ६, ५ ।

तस्या एकान्तरायास्तु अर्धर्चयो[1]र्द्विदेवतः ॥१४७॥
मरुद्गणप्रधानोऽयं द्यौन्द्रस्तु[2] विचिकित्सितः ।
मन्दू[क][3]समानवर्चेभौ[4] मन्दुनावासवर्चसा ॥१४८॥
मन्दू इति[ख] प्रशंसन्ति[5] येषामेव[6] द्विदेवतः ।
एकदैवत्यमाम्नायो विद्याध्ययनात् पदं[7] ॥१४९॥
रोदसी[ग] देवपत्नीमामयर्वाङ्गिरसे[घ] यथा[8] ।
[9]मरुद्गणप्रधानेयमाचार्याणां स्तुतिर्मता ॥१५०॥
मरुद्गणप्रधानत्वादिन्द्रस्तु विचिकित्स्यते[10] ।

---

(१) अर्धर्चाऽन्त्योर्द्विदेवत इति घ० ङ० । ङ० ।
(२) द्यौत्यं चेति ख० ग० । घ० ङ० । मरुद्गणप्रधानो द्यौत्यं चेन्द्र इति ङ० ।
(३) मन्दू इति ख० ।
(४) समानवर्चसमिति ग० । समानवर्चसा इति घ० ।
(५) मन्दू इति प्रशंसन्तीति क० घ० ङ० च० ।
(६) इषमेवेति ख० । येषामेवेति ग० ङ० । घ० ङ० ।
(७) विद्यायाध्ययनात्पदमिति ख० । विद्यानाध्ययनात्पदमिति क० घ० ङ० ।
(८) रोदसी इत्यादि श्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(९) मरुद्गणेति ङ० ।
(१०) विचिकित्सितः इति ख० ग० । घ० ङ० ।

---

(क) ऋ० १, ६, ७ । (ख) ऋ० १, ६, ७ । (ग) ऋ० १, १६७, ५ ।
(घ) ऋ० १०, ६२, १ ।

मरुद्गणं महेन्द्रस्य[१] समांशं सकलं विदुः[२] ॥१५१॥
अग्निमित्यग्निदैवत्यं पादस्तच द्विदेवतः[३] ॥
निर्मथ्याहवनीयार्थावग्निनाग्निः[४] समिध्यते ॥१५२॥
द्वितीये द्वादशर्चे तु प्रत्यृचं देवताः स्तुताः।
स्तूयन्ते ह्यग्निना सार्द्धं तासां नामानि मे शृणु[५] ॥१५३॥
प्रथमायां स्तुतस्त्वेध्मो[क][६] द्वितीयायां तनूनपात्[ख]।
नराशंस[ग] तृतीयायां चतुर्थ्यां स्तूयते त्विळः[घ] ॥१५४॥
बर्हि[ङ]रेव तु पञ्चम्यां द्वारो[च] दैव्यस्ततोऽन्यया[७]।
नक्तोषा सा तु सप्तम्यामष्टम्यां तु स्तुतौ[८] सह ॥१५५॥

---

(१) मरुद्गणमहेन्द्रस्येति घ०। मरुद्गणेनेन्द्रस्येति क० ख० ग० च०।
(२) समासं शाकलं विदुरिति क० ग० च०।
(३) पादस्तत्र द्विदैवतः इति ग० ङ०। घ० ङ०।
(४) निर्मथ्याहवनीयार्थौ अग्निनाग्निरिति क० ग०। निर्मथ्याहवनीयार्थेऽग्निनाग्निरिति च०।
(५) स्तूयते देवताऽथासां नामानि शृणुते ह गः इति क० ग० च०।
(६) समिद्धस्त्विति क० ग० च०।
(७) अन्ययेति ख०, अन्यथा इति च०।
(८) संस्तुतौ इति ग०, स स्तुतौ इति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १२, ७५, २। (ख) ऋ० १, १३, २। (ग) ऋ० १, १३, ३।
(घ) ऋ० १, १२८, १। (ङ) ऋ० ३, ५३, १०। (च) ऋ० ५, ५, ५।

दैव्या[क]विति[1] तु होतारौ नवम्यामृचि संस्तुताः ।
तिस्रो देव्यो दशम्यां तु ज्ञेयस्त्वष्टै[ख]व तु स्तुतः ॥१५६॥
एकादश्यां तु सूक्तस्य स्तुति[2] विद्याद्वनस्पतिम्[ग] ।
द्वादश्यां तु स्तुता देव्यो विद्यात्स्वाहाकृती[घ]रिह[3] ॥१५७॥
सूक्तेऽस्मिन् प्रत्यृचं यास्तु[4] देवताः परिकीर्त्तिताः ।
ता एव सर्वास्वाप्रीषु द्वितीयायां[5] विकल्पते[6]॥१५८॥
प्रैषैः सहैव हैतानि त्वेकादश प्रपद्यते[7] ।
यजुषः[8] प्रैषसूक्तं वा दशैतानीतराणि तु ॥१५९॥
सौत्रामणानि[9] तु त्रीणि प्राजापत्याश्वमेधिके ।

(१) दैव्याविति ख॰ ङ॰ ।
(२) स्तुतमिति ङ॰ ।
(३) देवी विद्यात्स्वाहाकृतीरितीति ग॰ ।
(४) प्रत्यृचे यास्त्विति क॰ घ॰ च॰ ।
(५) द्वितीया त्विति ख॰ ।
(६) विकल्पते इति ख॰ ग॰ च॰ ।
(७) प्रैषैः सहाप्रीसूक्तानि तान्येकादश सन्ति चेति ख॰ ग॰ ङ॰। सहाप्री इत्यत्र सहैयेति ख॰ ।
(८) यजूंषीति ख॰ ग॰ ङ॰ ।
(९) सौत्रामण्यौतीति क॰ घ॰ च॰ ।

(क) ऋ॰ १, २७, १२। (ख) ऋ॰ १, १२, २। (ग) ऋ॰ ६, ४८, १०।
(घ) ऋ॰ १, १८८, ११।

पुरुषस्य च यन्मेधे यजुःष्वेव तु तच्च ह[१] ॥१६०॥
ऋच्येव प्रैषसूक्तं स्याच्च यजुःष्वाद्रियेत तत्[२] ।
तेषां प्रैषकृतं[३] यच्च यच्च[४] दीर्घतमा जगौ ॥१६१॥
मेधातिथं[५] यदुक्तं च चौक्षेवोभयवन्ति तु ।
ऋषिर्गृत्समदो[क][६] यच्च वाध्र्यश्व[ख]स्तु[७] यदुच्यते ॥१६२॥
नराशंसवदत्रि[ग]स्तु[८] दददृशेऽप[९] यदौर्वशः ।
तनूनपादगस्त्यस्तु[१०] जमदग्नि[घ]स्तु[११] यज्जगौ ॥१६३॥
विश्वामित्र[ङ] ऋषिर्यच्च जगौ वै काश्यपोऽसितः[च] ।
मेधातिथेस्तूचां[१२] यास्तु प्रोक्ता द्वादश देवताः ॥१६४॥

---

(१) तानि मडिति ख० ग० ङ० ।
(२) यजुःष्वादि येषु चेति क० घ० च० ।
(३) प्रैषगतं सूक्तमिति ग० ।
(४) यच्च तच्चेति ख०, यत्तु तच्चेति ङ० पुस्तकान्तरञ्च ।
(५) मेधातिथेरिति ख०, मेधातिथाविति ग० ङ० पुस्तकान्तरञ्च ।
(६) ऋषौ गृत्समदे इति ग० ङ० पुस्तकान्तरञ्च ।
(७) वाध्राश्वे चेति ग० ङ० पुस्तकान्तरञ्च ।
(८) च्यत्रेश्चेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) ददृशं चेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) चेति ग० ङ० पुस्तकान्तरञ्च ।
(११) वामदेवश्चेति ग०, जामदग्न्यश्चेति ङ० पुस्तकान्तरञ्च ।
(१२) ऋचः इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० २, १९, ८ । (ख) ऋ० १०, ६९, ५ । (ग) ऋ० १, १२९;९ ।
(घ) ऋ० ३, ५३, १५ । (ङ) ऋ० ३, ५३, ९ । (च) ऋ० १, ४६, १० ।

सम्पद्यन्ते यथाग्नीकाः(१) सम्पदं तां निबोधत ।
ऊर्ध्वो(क)यः सोऽय(२)मेवाग्निरयं होत्रो(ख)(३) समिध्यते ।
भातेवैतत्कृतं(४) रूपं भातो(ग) होत्राः(५) समिध्यते(घ) ॥१६५॥

इति बृहद्देवतायां द्वितीयोऽध्यायः ।

---

(१) यथाग्निं ताः इति ख० ग० ङ० पुस्तकान्तरेषु ।
(२) सर्व्वमिति ख० ग० ङ० पुस्तकान्तरेषु ।
(३) होत्रा इति ग० ङ० पुस्तकान्तरेषु ।
(४) भ्रातैवैतत्कृतमिति क० ग० ङ० घ० ।
(५) होत्रे इति ग० ङ० पुस्तकान्तरेषु ।

(क) ऋ० ८, ४६, २ । (ख) ऋ० ७, १, १६ । (ग) ऋ० ५, ८, ५ ।
(घ) ऋ० ३, १५; ४ ।

# अथ तृतीयोऽध्यायः ।

तनूनपाद्यस्त्वेव नाम्ना सोऽप्युच्यते तनूः(१) ।
नपा(क)दिति प्रजामाहुस्तनुस्तस्य(२) च सम्भवम् ॥ १ ॥
नराशंसन्त्विहैके तु(३) होत्रभिस्ताहुरध्वरे(४) ।
नराः शंसन्ति सर्व्वेऽस्मिन्नासीना इति वादिनः(५) ॥ २ ॥
तदाहुरग्निमेवायं(६) नराशंसोऽध्वरे त्वयम्(७) ।
नरैः प्रशस्त आसीनैराहुश्च ऋत्विजो नराः(८) ॥ ३ ॥
इळा त्विति इळं रूपं स्तुपिभिर्गतिकर्मणः(९) ।

---

(१) यस्त्वग्नौ तनुमिति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ ।
(२) तनुतोऽस्येति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ ।
(३) नराशंसमिहैके त्विति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ।
(४) अग्निमाहुरथेतरे इति ग॰ ङ॰ पुस्तकान्तरस्थ।
(५) याऽध्वरे इति ग॰ ङ॰ पुस्तकान्तरस्थ।
(६) एतमेवाहुरन्येऽग्निमिति ग॰ ङ॰ पुस्तकान्तरस्थ।
(७) स्वयमिति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ।
(८) चैवर्त्विजो नरः इति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ।
(९) इडस्त्विमिडतं रूपमीडेश्च स्तुतिकर्म्मणः इति ग॰ ङ॰ पुस्तकान्तरस्थ। इड इत्यत्र इष, इडेश्च इत्यत्र ईष्ट्रोश्चेति ख॰, स्तुतिकर्म्मणः इत्यत्र, गतिकर्म्मणेति च॰।

---

(क) ऋ॰ १, १४३, १।

इडावां[क]स्तेन चोक्ताग्निरिरिणा[ख][१]गतिकर्म्मणा[२] ॥ ४ ॥
वर्हि[ग]रेवायमग्निस्तु सर्वं हि परिवृंहितम् ।
अनेन यः स्तुतो[३] वामन्निभेन परिदृश्यते[४] ॥ ५ ॥
द्वार[घ]स्तु[५] देव्यो याः प्रोक्ता विश्वेषां तास्तु यत्नतः ।
अग्नायी[ङ]मनुवर्त्तन्ते तथाग्नाय्यग्निमेव तु[६] ॥ ६ ॥
अग्नौ ध्रुवं स्थितास्तास्तु[७] स्तूयन्ते चाग्निना[८] सह ।
प्राधान्यात्तासु चैवाग्नेः स्तुतिष्वथ[९]हविःषु च ॥ ७ ॥
नक्तोषा सा[१०] [redacted] ये देव्यावाग्नेय्यावेव ते स्तुते ।

---

(१) इडिनेति ग०, ईडिनेति ख० पुस्तकान्तरञ्च ।
(२) वर्धिकर्म्मणेति ग०, वर्धिकर्म्मणेति ख०, वृद्धिकर्म्मणेति पुस्तकान्तरं ।
(३) यद्भुत इति ग० ख० पुस्तकान्तरञ्च ।
(४) परिवृंहित इति ग० घ० ख० ।
(५) द्वारस्त्विति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) आग्नायीमन्ववर्त्तन्त मामिं नाग्नाय्य एव चेति क० ख० च० ।
(७) ध्रुवाश्चितत्वास्त्विति क० घ० च० ।
(८) संस्तूयन्तेऽग्निनेति ख० ग० ङ० ।
(९) स्तुतिष्वेवेति ग० ङ० पुस्तकान्तरञ्च ।
(१०) नक्तोषाऽग्नौ इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, २, ५ । (ख) ऋ० ८, ८०, १ । (ग) ऋ० ३, ५२, १७ ।
(घ) ऋ० १, १३, ६ । (ङ) ऋ० १, २२, १२ ।

श्यामाग्नेयी[1] हि कालस्य तस्यैवोषाः[क] कलैव तु[2] ॥ ८ ॥
तम उच्छत्यु[घ]षा नक्ता[ङ] नक्तीमां हिमविन्दुभिः ।
अपि वा[3] व्यक्तवर्णेति नञ् पूर्वां वे[च]रिदं[4] भवेत्[5] ॥ ९ ॥
नाम्ना भवत्युषा[6]स्यैव सैषा[7] प्रागुदयाद्रवेः ।
[8]षा हि वोषा[9] भवत्यादौ मध्ये प्राप्ते तमस्वती[10] ॥ १० ॥
दैव्याविति[11] तु होतारावुभौ[12] पार्थिवमध्यमौ ।

---

(१) मात्याग्नेयीति ख०, श्यावाग्नेयीति ग०, श्याव्याग्नेयीति ङ० पुस्तकान्तरयोः ।
(२) किला(ख)ऽवमे(ग)ति क० ग० च० ।
(३) अभि वेति ख० ।
(४) येदिदमिति ख० ।
(५) तम उच्छत्युषेति श्लोकः क० ग० च० पुस्तकेषु न दृश्यते ।
(६) उषाः इत्यत्र उषेति पाठः संगतः ।
(७) सैषेति ख० ।
(८) ख० ग० ङ० पुस्तकेषु, सा हि वोषेति श्लोकार्द्धं, नाम्ना भवत्युषा-स्यैवेति श्लोकार्द्धात् प्राक्, पठितं ।
(९) दोषेति क० घ० च० ।
(१०) निशीथे सा तमस्विनीति ख० ग० ङ० पुस्तकान्तरयोः ।
(११) देव्याविताविति ख० ग० ।
(१२) अग्नी इति ग० ङ० पुस्तकान्तरयोः ।

---

(क) ऋ० १, ४६, १ । (ख) ऋ० १ ९२,४ । (ग) ऋ० ३, ५४, ५ ।
(घ) ऋ० १, ४६, १ । (ङ) ऋ० १, ७३, ७ । (च) ऋ० १,७२, ६ ।

दिव्यादग्नेस्तु(१) जज्ञाते देव्यौ तेनेह जन्मना(२)॥ ११ ॥
तिस्रस्तु देव्यो याः प्रोक्तास्त्रिस्थानैवेह सा तु वाक्।
त्रिविधेनोच्यते नाम्ना ज्योतिःषु त्रिषु वर्त्तिनी ॥ १२ ॥
अग्निमेवानुगेला(३) तु मध्ये चैन्द्री(४) सरस्वती।
अमुं स्थिताधिलोकन्तु(५) भारती भारतो ह्यसौ ॥१३॥
सैषा तु त्रिविधा वै वाग्दिवि च द्योवि चेह च।
व्यस्ता (६)चैव समस्ता च भजतेऽग्नीनिमानपि(७) ॥१४॥
त्वष्टा तु यः सोऽयमेव (८)पार्थिवोऽग्निरिति श्रुतिः(९)।
पार्थिवस्यास्य वर्चः स्युः कस्याप्यृक्(१०)वार्त्तवेषु च(११) ॥१५॥
त्विषित(क)स्त्वष्टुतो वा स्यात् (१२)तूर्णमश्नुवतीति वा(१३)।

---

(१) चौति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(२) कथ्यत इति क॰ ख॰ ङ॰ घ॰।
(३) अनुमैलेति ख॰, अनुसेवेति क॰ ग॰ घ॰।
(४) प्राप्तेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(५) स्थितत्रिलोकन्त्विति क॰ ग॰ घ॰।
(६) व्याप्तेति क॰ ग॰ घ॰।
(७) भजत्यग्नीनिमानन्विति क॰ ग॰ घ॰।
(८) इयामेवेति ख॰ ङ॰ पुस्तकान्तरञ्च, यत् स्वयं प्रोक्त इति ग॰।
(९) स्तुतिरिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(१०) कास्यावीदिति ख॰, कस्याप्टगिति ङ॰ पुस्तकान्तरञ्च।
(११) पार्थिवो वाध्याग्ने च कौत्सा त्रिस्थानेषु चेति क॰ ग॰ घ॰।
(१२) तुष्टिते वा स्यादिति ख॰, त्वक्षतेर्वा स्यादिति ग॰ ङ॰ पुस्तकान्तरञ्च।
(१३) अच्युत एव चेति ख॰ ग॰, वा इत्यत्र चेति ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १०, ८४, २।

कर्मसु त्वरणां वेत्ति (१)तेन नामैत(२)दश्नुते ॥१६॥
यः सहस्तमौजस्तु (३)र्वेश्वन्द्रमुपाश्रितः(४) ।
सोऽयं(५) त्वष्टारमेवाग्निः (६)परं वन्दे च यन्मधु(७),(क) ॥१७॥
प्रादाद्ब्रह्मा च (८)सुप्रीतः पुत्राय(९) यदथर्वणे(१०) ।
स चाभवदृषिस्तेन ब्रह्मणा वीर्यवत्तमः(११) ॥१८॥
तमृषि(१२)र्निषिषेधेन्द्रो (१३)मैवं वोचः (१४)कस्यचिन्मधु ।
न हि प्रोक्ते मधुन्यस्मिन् जीवन्तं त्वोत्सृजाम्यहं(१५) ॥१९॥

---

(१) कर्मसूत्सारयो वेत्तीति ग० ङ०, वेत्तीत्यत्र वेत्सीति ख० पुस्तकान्तरञ्च।
(२) नाश्नीतदिति ख० ।
(३) सहस्तमो रश्मिरिति ग० ङ० ।
(४) चन्द्रमसोऽश्रित इति क० घ० च० ।
(५) सोऽप्यीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) यमिमिति ग० ङ० पुस्तकान्तरञ्च ।
(७) वेदवतं मधुमिति ख०, वेद च यन्मध्विति ग०, वेद च यन्मध्विति ङ०, देव च यन्मध्विति पुस्तकान्तरं ।
(८) चप्रीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) सुतायेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) तदथर्वंच इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(११) दीप्तिमत्तरः इति ख० ग० ङ० पुस्तकान्तञ्च ।
(१२) तं त्वृषिरिति क० घ० च० ।
(१३) निषिषिधेन्द्र इति क० घ० च० ।
(१४) मेदं वाचः इति क० घ० च० ।
(१५) मधौ प्रदत्ते जीवन्तं त्वहमुत्सृजे इति क० घ० च० ।

---

(क) ऋ० १, १४, १० ।

तमृषिं त्वश्विनौ देवौ विधिव(१)न्मध्वयाचतां(२) ।
स च ताभ्यां तदाचष्टे यदुवाच शचीपतिः ॥२०॥
तमब्रूतान्तु नासत्यावाश्वेन (३)शिरसाऽभवत् ।
मध्वाशु ग्राहय त्वं न(४)श्चेन्द्रस्त्वां हनिष्यति(५) ॥२१॥
आश्वेन (६)शिरसा तौ तु (७)दध्यङ्ङाह यदश्विनौ(८) ।
तदास्येन्द्रोऽहरत्तन्तं (९)न्यधात्तामस्य तौ शिरः(१०) ॥२२॥
दधीच(क)स्तु(११)च्छिरस्त्वाश्वं हृतं वज्रेण वज्रिणा ।
पपात सरसो मध्ये पर्वते शर्यणावति(ख) ॥२३॥
तदश्वस्तु(१२) समुत्थाय भूतेभ्यो विविधान् वरान् ।

---

(१) विविक्ते इति ग० ङ० पुस्तकान्तरञ्च ।
(२) याचतामिति क० ख० ङ० च० ।
(३) वाश्व्येनेति ग० ङ० पुस्तकान्तरञ्च ।
(४) त्वावामिति क० ख० ध० च० ।
(५) नेन्द्रस्त्वामवधीत्ततः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) चाश्व्येनेति ङ० पुस्तकान्तरञ्च ।
(७) ताभ्यामिति ख०, तत्त्विति क० घ० च० ।
(८) यदश्विनोरिति क० घ० च० ।
(९) तदस्येन्द्रो हरस्येहेति ख० ।
(१०) यावन्नधत्तामस्य यच्छिर इति ग०, नवतामस्य यच्छिरः इति ख०, चान्यन्नधत्तामस्य यच्छिरः ङ० पुस्तकान्तरञ्च ।
(११) दधीचस्येति ग० ङ० पुस्तकान्तरञ्च ।
(१२) तच्छिरस्त्विति क० ख० घ० च० ।

---

(क) ऋ० १, ८४, १३ । (ख) ऋ० १, ८४, १४ ।

प्रादात्स(१)युगपर्यन्तं तास्वेवाप्सु न्यमज्जत(२) ॥२४॥
त्वष्टा रूपविकर्त्ता च योऽसौ माध्यमिके गणे ।
स्तुतः स च निपातेन(३) सूक्तन्तस्य न विद्यते ॥२५॥
(क)वनस्पतिं तु यं प्राहुरयं सोऽग्निर्वनस्पतिः ।
अयं वनानां हि पतिः पाता पालयतीति च(४) ॥२६॥
अग्निर्गृत्समदेना(ख)ऽयं वनस्पतिवदीडितः ।
मन्दस्व(ग)त्यस्य (५)सूक्तस्य (६)पञ्चस्य तृतीयया ॥२७॥
यूपवत्तरुवच्चैव स्तुतिर्याश्च (७)प्रसङ्गजा ।
समस्तेनैव सूक्तेन (८)तृतीये सा तु मण्डले ॥२८॥
स्वाहाकृतीश्च(घ)सङ्ख्यास्तु (९)विदुषां मतयोऽभवन् ।

---

(१) प्रादायेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) निमज्जतीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) निपाते चेति क० घ० च० ।
(४) चेति क० घ० च० ।
(५) मन्दस्वेति चेति ग० ङ० पुस्तकान्तरञ्च ।
(६) सूक्ते चेति ग० ।
(७) यास्येति ग० ङ० पुस्तकान्तरञ्च ।
(८) सर्व्वेषामंतिसूक्तेनेति ख० ग० ङ०, सर्व्वेषा यतिसूक्तेनेति पुस्तकान्तरं ।
(९) क० घ० च० पुस्तकेषु, स्वाहाकृतास्वसंख्यास्विति पाठोऽस्ति । स्वाहाकृतयोऽनेकास्येति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ६, ४८, १७ । (ख) ऋ० २, १६, ८ । (ग) ऋ० १, २६, ५ ।
(घ) ऋ० १, १८८, ११ ।

तत्सर्वं सोऽय[१]मेवाग्निर्भवतीति विनिश्चयः ॥२८॥
अयं कर्त्ता च देवानां [२]याहतिस्तामिहैकजा।
अयं प्रसूतिर्भूतानां च तेषा[३]मयमव्ययः ॥३०॥
तनूनपा[क]द्द्वितीया तु [४]नराशंस[ख]वती च या।
समस्तते [५]प्रयोक्तव्ये विश्वेवोभयवत्विह[६] ॥३१॥
नराशंसवती वा स्या[७]द्द्वितीयेह [८]प्रजार्थिनां।
बलकामोऽथ वा यः स्या[९]द्भूरिमिच्छति वापि [१०]यः[११] ॥३२॥
आग्नेयमिति[१२] यत्त्वेभि[१३]र्वैश्वदेवमिहोच्यते।

---

(१) त्वयमिति ग० ङ० पुस्तकान्तरञ्च।
(२) अयं हि कर्त्ता स्वाहानामिति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) सर्व्वेषामिति ख० ग० ङ० पुस्तकान्तरञ्च।
(४) चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) समस्येते इति ख० ग०, समय्येते इति ङ० पुस्तकान्तरञ्च।
(६) उभयवत्स्वितिति ग०, उभयवतु स्विति ङ०, उभयवतु चेति पुस्तकान्तरं।
(७) चाप्यादिति ग० ङ०।
(८) चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) यशस्कामो वेति ख० ग० ङ० पुस्तकान्तरञ्च।
(१०) भूतिमिच्छेद्यापीति ख० ग० ङ० पुस्तकान्तरञ्च।
(११) वेति ग०।
(१२) आग्नेयं सूक्तमिति ख० ग० पुस्तकान्तरञ्च, आग्नेये सूक्तमिति ङ०।
(१३) सूक्तमेभिर्यदिति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १,१८८,२। (ख) ऋ० १,१४२,३।

न सावित्रे क्रयामी[क]ति न सूर्य्यायां[ख] क्रतौ मुखे[१] ॥४५॥
न चैवैवं प्रपादेषु[२] मन्त्रेष्वन्येषु केषुचित्।
न च यत्र सजोषेति पदं वा स्यात् सजू[ग]रिति ॥४६॥
यस्मिन्[३] प्रसङ्गादपि तु वह्वीनां परिकीर्त्तनम्।
वैश्वदेवं तदप्याह स्थविरो लोमकायनः[४] ॥४७॥
असंस्तुतं संस्तुतवत्[५] प्रदिष्टं दैवतं क्वचित्।
मन्त्रेस्तद्दृषयोऽर्हन्ति[६]तान्तु वुध्येत शास्त्रतः[७] ॥४८॥
आदौ तु मध्ये वान्ते च विधादृषु च कर्मभिः[८]।
कर्माण्यनुपदिष्टानि प्रदिष्टान्यपि तु क्वचित्[९] ॥४९॥
कर्मैव तावत्साविव्यां निविदि स्तौति कर्मणा।

---

(१) मखे इति ग० ङ०।
(२) प्रवादेष्विति ख० ग० ङ०।
(३) यस्मिन्निति क० ग० घ०।
(४) रोमकायनः इति ख० ङ०।
(५) स्तुतं वायीति ख० ग० ङ०।
(६) देवतास्तद्दयोऽर्चन्तः इति क० घ० च०।
(७) शास्त्रविदिति ख० ग० ङ० पुस्तकान्तरञ्च।
(८) पृथक्त्वेषु च कर्तृभिरिति ग० घ०, पृथक्त्वेमु च कर्तृभिरिति पुस्तकान्तरं।
(९) स्तवदिति क० घ० च०।

---

(क) ऋ० १, ३५, १। (ख) ऋ० ५, ७२, ५। (ग) ऋ० १, २३, ७।

यद्धेनुरुष्ट्रानडुहौ[१] वोढा दोग्ध्याप्सुरेव वा ॥५०॥
भार्गवः स्तौति चाग्न्यादीन्मित्रादीनश्वसंस्तुतौ[२] ।
यद्देभिरिति चैतस्मिन् वैश्वदेवेऽग्निमर्चति ॥५१॥
तदाङ्गिरादावन्ते च प्रायशोऽन्यां स्तुवन्नृषिः[३] ।
प्रातर्योगात्[क][४] प्रसङ्गाद्वा स्तौत्यन्यामपि देवताम् ॥५२॥
यस्यां वदत्यर्थवादान्[५] सा ज्ञेया सूक्तभागिनी ।
यान्तु स्तौति प्रसङ्गेन सा विज्ञेया निपातिनी ॥५३॥
चतुर्द्धा भण्यते[६] चास्मिन् सूक्ते वै[७] सूक्तभागिनी ।
यस्मिन् सर्वांस्तु राजर्षीनृषीन् वापि स्तुवन्नृषिः ॥५४॥
मेधातिथिरगस्त्यस्तु[८] वृहदुक्थो मनुर्गयः[ख] ।
ऋजिश्वा[ग] च सुकर्षस्य शार्यातो[घ] गोतमो सुप्रः[९] ॥५५॥

---

(१) यद्धेनुः कश्यनाहाविति ङ० पुस्तकान्तरञ्च ।
(२) चाश्वसंस्तुताविति क० ख० ग० घ० ।
(३) चन्याः स्तुवनृषः इति ग० ङ० पुस्तकान्तरञ्च ।
(४) प्रतियोगादिति ग० ङ० पुस्तकान्तरञ्च ।
(५) वदन्त्यर्थपादाः इति क० ग० घ० ।
(६) न तु व्याहन्यते इति क० ग० घ० ।
(७) वेति ग० ।
(८) चेति ख० ङ० ।
(९) मानवो यमः इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ४१, २ । (ख) ऋ० ६, २, ८ । (ग) ऋ० ५, २९, ११ ।
(घ) ऋ० ३, ५१, ७ ।

स्वस्त्यात्रेयः परुच्छेपः कक्षीवा[क]नाथिरौर्वशः[१] ।
नाभाक[ख]श्चैव निर्दिष्टो दुवस्यु[ग]र्ममतासुतः[२] ॥५६॥
विहव्यः[घ] कश्यप ऋषि[३]र्वत्सारश्च नामयः[ङ] ।
वामदेवो मधुच्छन्दाः पार्थो दक्षसुता[४]दितिः ॥५७॥
जुह्वर्गृत्समद[च]श्चर्षिर्देवाः सप्तर्षयश्च[५] ये ।
तापसोऽग्निर्ऋषिः[६] कुत्सः[छ] कुसीदी चित[ज] एव च ॥५८॥
बन्धुप्रभृतयश्चैव चत्वारो भ्रातरः पृथक् ।
विष्णुश्च नेजमेषश्च नाम्ना संवनन[७][झ]श्च यः ॥५९॥
एते तु सर्व्वे[८] एवास्य विश्वैः स्वैः कर्म्मजैर्गुणैः ।
समस्तैरथ च[९] व्यस्तैः पृथक्सूक्तेषु तुष्टुवुः ॥६०॥

---

(१) उर्व्वशदिति ङ० पुस्तकान्तरञ्च ।

(२) ममतासुता इति ख० च० ।

(३) चर्षिरिति ख० ङ० पुस्तकान्तरञ्च ।

(४) पाथ्योदक्षसुतेति क० घ० च० ।

(५) देवास ऋषयश्चेति ङ० पुस्तकान्तरञ्च ।

(६) यमोऽग्निस्तापसः इति ग० ङ० पुस्तकान्तरञ्च ।

(७) संवन इति ग० ।

(८) सर्व्वा इति क० घ० च० ।

(९) वेति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, १२६, २ । (ख) ऋ० ८, १४, २ । (ग) ऋ० १०, १००, १२ । (घ) ऋ० १, १०८, ६ । (ङ) ऋ० १, १३९, ९ । (च) ऋ० २, १९, ८ । (छ) ऋ० १, १०६, ६ । (ज) ऋ० १, ५२, ५ । (झ) ऋ० १०, ९३, १२ ।

पार्थिवो द्रविणोदा(क)ग्निः(१) पुरस्ताद्यस्तु कीर्त्तितः ।
तमाहुरिन्द्रं दार्ढ्या(२)देके तु बलवित्तयोः ॥६१॥
अयं हि द्रविणोदाऽग्निरयं दाता बलस्य हि ।
द्रविणोदाग्निरेवायं द्रविणोदा(ख)स्तदोच्यते ॥६२॥
आग्नेयेष्ववदृश्येत(३) प्रवादाद्द्रविणोदसः ।
(४)ऐन्द्रस्य नवकस्येह(५) यदैन्द्रावरुणं परम् ॥६३॥

---

(१) द्रविणोदोऽग्निरिति क० घ० च० ।

(२) असिदार्ढ्यादिति ङ० पुस्तकान्तरञ्च ।

(३) आग्नेयेष्वेव दृश्यन्ते इति ग० ।

(४) ख० ङ० चिह्नितपुस्तकयोः, पुस्तकान्तरे च ऐन्द्रस्य नवकस्येहेति श्लोकार्द्धात्प्राक्, द्रविणोदाग्निरेवायमिति श्लोको न विद्यते । तत्र,—

जायते च बलेनायमध्येतृभिरध्वरे ।
हवींषि द्रविणा प्राङ्ङंविशो यत्र जायते ॥
दातारमृत्विजस्तेषां द्रविणोदास्ततः स्वयम् ।
ऋत्वीनां पुन स्तेषां दृश्यते बहुशोपदैः ॥
मध्यमाद्वा यतो मध्ये तस्माद्वा द्रविणोदसः ।

एतत्सार्द्धश्लोकद्वयं दृश्यते । ङ० चिह्नितपुस्तके द्रविणोदसः इत्यत्र द्राविणोदस इति पाठः, पुस्तकान्तरे च अध्येतृभिरत्र अध्येत्विति पाठोऽस्ति ।

(५) नवकस्यादेति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, १५, १० । (ख) ऋ० १, १५, ७ ।

तस्योत्तरं तु (१)सोमानं स्तूयते ब्रह्मणस्पतिः ।
ऋग्भिः पञ्चभिराद्याभि(२)स्तिसृभिः सदसस्पतिः ॥६४॥
नराशंसो(क)ऽन्यया चर्चा सोमेन्द्रौ तु निपातिनौ ।
चतुर्थ्यां सोम इन्द्रश्च पञ्चम्यां दक्षिणा सह(३) ॥६५॥
प्रसङ्गादृषिणा प्रोक्ताः सम्बन्धाः स्थानलोकयोः ।
प्राजापत्यं तथैन्द्रः स्यादिति तस्येह नामनी(४) ॥६६॥
कथिते द्वे च षट्चान्यान्येषाञ्चाद्याः(५) प्रजापतिः ।
(६)शिष्टानि यानि नामानि तानि वक्ष्याम्यतः परं ॥६७॥
सप्तभिः कस्य कामस्य सदसस्पतिरेव च ।
इळस्पति(७)र्वाचस्पतिस्तत(८)स्तु ब्रह्मणस्पतिः ॥६८॥
तृतीयान्ते तु सूक्तस्य चतुर्थे(९) पञ्चमस्य यत् ।

---

(१) तस्योत्तरे चेति क॰ घ॰ च॰ ।
(२) चान्याभिरिति ख॰ ।
(३) तथेति क॰ घ॰ ।
(४) यानि तस्येह नामानि प्राजापत्यानि तानि त्विति ङ॰ पुस्तकान्तरञ्च ।
(५) कथितानीह षष्ठानि तेषां त्वाद्य इति ङ॰ पुस्तकान्तरञ्च ।
(६) शिष्टानीति श्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(७) इडस्पतिरिति क॰ ।
(८) स्तुत इति ख॰ च॰ ।
(९) प्रथममिति ख॰ ङ॰ पुस्तकान्तरञ्च ।

---

(क) ऋ॰ १, १४२, ३ ।

चतुर्भिरितरैस्तच(१) न सूक्तं नाप्यृगुच्यते(२)॥६९॥
सर्वाण्येव तु सर्वासां देवतानां प्रजापतेः।
नामानि कथयन्त्येते सम्यग्भक्तिविदृचवः॥७०॥
तदाङ्गनैतदेवं स्यादष्टानामेव(३) हि स्तुतः।
तैरेव चास्य कल्प्यन्ते(४) क्रतवश्च हवींषि च॥७१॥
मरुद्भिर्मध्यमस्थानैः पर(५) मग्निस्तु पार्थिवः।
नवकेनेह(६) सूक्तेन प्रतीत्य(७)(क)मिति संस्तुतः॥७२॥
मरुतां साहचर्यात्तु(८) सूक्तेऽस्मिन्नाग्निमारुते।
मन्यते माध्यमञ्चैव(९) यास्कोऽग्निं न तु पार्थिवम्॥७३॥
स्यादयं पार्थिवस्त्वेव(१०) तथा रूपं हि दृश्यते।

(१) स्वेनमिति क॰ घ॰ च॰।
(२) नापि त्वृचोऽश्नुते इति क॰ घ॰ च॰, नानाप्यृचोऽश्नुते इति ग॰।
(३) एष इति ख॰ ग॰ ङ॰।
(४) तैरेवास्य प्रकल्प्यन्ते इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) स्वयमिति क॰ ग॰ घ॰ च॰।
(६) नवर्चनेहेति ङ॰ पुस्तकान्तरञ्च।
(७) प्रत्यञ्चमिति ङ॰।
(८) वेति ङ॰।
(९) मध्यम स्त्वेवमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) पार्थिवस्त्वेवेति ङ॰ पुस्तकान्तरञ्च।

(क) ऋ॰ ७, ६८, ६।

भूयसे[क] वीतये[ख] चेति[1] वैद्युतेन तदस्ति हि[2] ॥७४॥
अथ स्याद[3]भिधानस्य देवतायाः पृथक् पृथक्[4]।
ऋचोऽर्धर्चस्य पादस्य कथंज्ञायेत[5] दैवतम् ॥७५॥
यथा निविदि सावित्र्यां स्तूयते कर्म कर्मणा[6]।
दोग्ध्री धेनु[ग]र्वोढानड्वानाशुः सप्तिपुरं धियाः[7] ॥७६॥
यथा वरुणमित्रीया[8] वरुणः प्राविता भुवत्[घ]।
सूक्तप्रायेणैभिरग्ने[9] परोक्ष्यं[10] तत्र देवताः[11] ॥७७॥
मन्द्राणां द्विपदादीनां द्विदेवषड्देवतम्।
असंस्तुतं संस्तवमादिष्टं दैवतं क्वचित् ॥७८॥

---

(१) भूयसे वीतये चैवदिति क० ग० घ०।
(२) वैद्युतेनेत्यतस्त्विहेति ख० ङ०।
(३) अतस्त्विदिति ङ० पुस्तकान्तरञ्च।
(४) स्तुतौ स्तुताविति ख० ङ० पुस्तकान्तरञ्च।
(५) ज्ञायेतेति ख० ङ० पुस्तकान्तरञ्च।
(६) सूर्यंकर्मणेति ङ० पुस्तकान्तरञ्च।
(७) तथैव चेति क० ग० घ०।
(८) यथा च प्रग्नो मित्रीया इति क० ग० घ०।
(९) चाग्नेरिति ख० ङ० पुस्तकान्तरञ्च।
(१०) परोक्षः इति ग०।
(११) परोक्षास्तत्र संस्तवः इति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १६, २। (ख) ऋ० १, ५, ६।
(ग) ऋ० २, ३१, ७। (घ) ऋ० १, २६, ८।

यत्र द्विदेवते मन्त्र एकवद्देवतोच्यते ।
विभक्तस्तुति तद्विद्यात् बह्वस्ववह्वच्च तत्[१] ॥७९॥
आशीर्वादेषु संज्ञास्तु कर्मसंस्थासु देवताः ।
बह्वो हि बहुवच्च[२] द्विवद्वौ यत्र संस्तुतौ[३] ॥८०॥
सुधन्वन[क] आङ्गिरसस्या[ख]सन् पुत्रास्त्रयः पुरा[४] ।
ऋभु[ग]र्विभ्वा[घ][५]च वाज[ङ]श्च[६]शिष्यास्ते त्वष्टुरेव च[७] ॥८१॥
शिक्षयामास तांस्त्वष्टा त्वाष्टं यत्कर्म किञ्चन ।
परिनिष्ठितकर्माणो विश्वेदेवा उपाह्वयन् ॥८२॥
धेनुं सर्वदुघां चक्रुस्तत्तं समवरुध्यते ।
इन्द्रतस्तत्तयोऽश्विभ्यां रथं दिव्यं त्रिवन्धुरम् ॥८३॥
इन्द्राय च हरी देवप्रहितेनाग्निनापि यत् ।

---

(१) बहुत्वबहुवच्च यद्विति ख० पुस्तकान्तरञ्च ।
(२) बह्वो हि बहुवाच्यश्च इति ख० ङ० पुस्तकान्तरञ्च ।
(३) द्विपदे यत्र संस्तुते इति क० ग० घ० च० ।
(४) आसन् सुधन्वन-पुत्रास्त्रय आङ्गिरसस्य ये इति ख० ङ० पुस्तकान्तरञ्च ।
(५) विभ्वेति ग० घ० ।
(६) वायुश्चेति ख० ।
(७) त्वष्टुश्च तेऽभवन्निति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ५, ४२, ११ । (ख) ऋ० ४, ४०, १ । (ग) ऋ० १, ११०, ७ ।
(घ) ऋ० १, ११६, १ । (ङ) ऋ० १, २७, ८ ।

एकञ्च सममित्युक्ते ज्येष्ठो[१] द्वावित्यथाह च ॥८४॥
उक्त्वा ततश्चतुष्कमसान्ययोर्नक तत्र हर्षिताः ।
त्वष्टा च सविता[२]ऽयैव[३] देवदेवप्रजापतिः ॥८५॥
सर्व्वान् देवान् समामन्त्र्य चामृतत्वं ददुश्च ते ।
तेषामाद्यन्त्ययो[४] नाम्ना दृश्यते बहु वस्तवः[५] ॥८६॥
विश्वेषां ते ततश्चक्रु[६]र्वाहनान्यायुधानि च ।
तृतीयसवने तेषां तेस्तु भागः प्रकल्पितः ॥८७॥
अपिब[क]त्सोममिन्द्रश्च तैस्तत्र सवने[७] [ख]सह ।
तेषां स्तुतिरिन्द्रसूक्तमय[८]मित्यार्भवं[९] परम् ॥८८॥

---

(१) त्वयेति पुस्तकान्तरं ।
(२) सवितेति ख० ।
(३) ययैवेत्यत्र चैवेतिपाठः समीचीनः ।
(४) चाद्यन्तयोरिति सविसर्गान्तपाठो युक्तः ।
(५) धेनुं सवर्दुघामित्यदि दृश्यते बहुवक्तवः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते । दृश्यते बहुवक्तव इत्यत्र, दृश्यन्ते बहुवक्तवा इति पाठः साधुः ।
(६) ततस्तत्क्षुस्ते तददिति ख० पुस्तकान्तरञ्च ।
(७) सवनैरिति ग० ।
(८) त्वयमिति क० ग० घ० च० ।
(९) इत्यष्टकमिति ग०ख० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ३२, ३। (ख) ऋ० १, १६, ५।

इहेन्द्राग्नी स्तुतौ देवौ तृतीयस्यादिरश्विनौ[१] ।
हिरण्यपाणिं[२] सावित्री तिस्रश्चाप्यत[३] उत्तराः[४] ॥८९॥
एकाग्नेर्देवं तु देवानां[५] द्वादश्यो देवपत्न्यः ।
इन्द्राणी वरुणानी च आग्नेयी[६] च[७] पृथक् स्तुताः ॥९०॥
द्यावापृथिव्यौ द्वे च स्यात् स्योना[क]दित्येव पार्थिवी[ख][८] ।
देवानां वात इत्येषा[९] सूक्तमेषस्तु वष्णवः ॥९१॥
वायोस्तोचेन्द्रवायुभ्यां स्तृचो द्वाभ्यां[१०] ततः परम् ।
त्यचे[११] मित्रावरुणयोस्तथेन्द्राय मरुत्वते ॥९२॥

---

(१) आदितोऽश्विनाविति ख० पुस्तकान्तरञ्च ।
(२) हिरण्यपाणिरिति पाठो युक्त ।
(३) ऽप्यन्य इति ख०, सावित्र्यस्तस्तोऽप्यत इति ख० पुस्तकान्तरञ्च ।
(४) सतस्त्राप्यथोत्तराः इति ग० ।
(५) च देवीनामिति ख० पुस्तकान्तरञ्च ।
(६) अग्नायीति ख० ख० पुस्तकान्तरञ्च ।
(७) वा इति ख० ख० पुस्तकान्तरञ्च ।
(८) ऋचोर्द्वे स्योनेत्युक् पार्थिवी स्तुतेति ख० ।
(९) अतो देवा इति देवीति क० घ० च० ।
(१०) त्र्यचो द्वाभ्यामिति क० ग० घ० ङ० पुस्तकान्तरञ्च, दृचस्ताभ्या-
मिति ख० ख० ।
(११) त्र्यचः इति ग० ख० पुस्तकान्तरञ्च ।

---

(क) ऋ० १,२२,१५। (ख) ऋ० ८,२५,६।

ऋचो[१]-विश्वेषां देवानां पूष्ण आघृणये[क] तृचः[२] ।
असक्तो हि घृणिस्तस्य दध्नः पूर्णे दृती[ख]रथे[३] ॥९३॥
आघृणिस्त्युतः पूषा स गोभिरिष्यते यतः[४] ।
यथा हि मधुनः पूर्णां दृतिर स्तौति चाश्विनौ[५] ॥९४॥
आवर्त्तनिं मधुनेति दृतेरिव च दृश्यते[६] ।
अर्धाष्टमा अपां ज्ञेया अर्धर्चान्त्याग्निदेवता[७] ॥९५॥
कस्य नूनन्तु काद्याद्या आग्नेय्यृक् सवितुस्तृचः ।
भगभक्तस्य[ग] भागो वा परं यदिति[८] वारुणम्[९] ॥९६॥
वषिष्वाचीति चाग्नेये चागग्नेर्मध्यमस्य तु ।

---

(१) तृच इति ग० घ० ङ० च० ।

(२) आघृणयेति चेति ख०, आघृणिरित्यृचः इति ग०, तथाघृणयेति चेति ङ० ।

(३) दतः रथे इति ङ० पुस्तकान्तरञ्च ।

(४) गोरिभोरिष्यते ततः इति ख० ।

(५) दितिमर्धौति चाश्विनाविति ख०, चाश्विनौ इति ङ० ।

(६) असक्तो हि घृणिस्तस्येत्यादि इतिरेव न दृश्यते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

(७) अध्यर्द्धान्त्याग्निदेवतेति ख० ङ०, अप्यर्द्धान्त्याग्निदेवतेति ग० ।

(८) हि यचेति ग० ।

(९) यचिद्धि वारुणो इति ङ० ।

---

(क) ऋ० १, २३, १४ । (ख) ऋ० ४, ४५, १ । (ग) ऋ० १, २४, ५ ।

जराबोधे[क]ति विज्ञेया वैश्वदेव्युत्तमोत्तमा[1] ॥९७॥
पराश्वतस्रो यास्त्वैन्द्रे चेन्द्रोलूखलयोः स्तुतिः[2] ।
मन्येते[3] यास्ककार्थक्या[4]विन्द्रस्येति तु भागुरिः ॥९८॥
यच्चिद्ध्युलूखलस्य द्वे द्वे परे मुसलस्य तु ।
चर्माधिषवणीयं[5] वा सोमं वाप्यत्र प्रशंसति ॥९९॥
ऐन्द्रं यच्चिद्धि सप्तेत्युत्तरस्त्वाश्विनात्तृचात्[6] ।
आश्विनादुत्तरस्त्वन्त्य उषसः[7] स्तृच उत्तमः ॥१००॥
स्तूयमानः शश्वदिति प्रीतस्तु मनसा ददौ ।
शुनःशेपाय[ख] दिव्यन्तु रथं सर्वं हिरण्मयम् ॥१०१॥
आग्नेयं सूक्त[8]मैन्द्रे च[9] चिकिदित्याश्विनं ततः ।
स्तुतेऽर्थवादं कर्मैतदिन्द्रस्येति तु शंसति ॥१०२॥
पादोऽग्नये क्रयामीति मैत्रावरुण उत्तरः ।

---

(१) वैश्वदेव्युत्तमानमः इति क० ग० घ० च० ।
(२) यत्रेति मुसलोलूखलस्तुतिरिति ङ० पुस्तकान्तरञ्च ।
(३) मन्येतामिति ख० ङ० पुस्तकान्तरञ्च ।
(४) यास्ककात्थक्याविति ङ० पुस्तकान्तरञ्च ।
(५) चर्माधिषवणीये इति ङ० ।
(६) आश्विनं तृचमिति ङ० ।
(७) आश्विनेत्युत्तरं कस्य चौषसः इति ङ० पुस्तकान्तरञ्च । कस्य इत्यत्र कस्विति ख० ।
(८) यत्वमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) द्वे इति ङ० ।

---

(क) ऋ० १, २७, १०। (ख) ऋ० १, २४, १२।

तृतीयो रात्रिसंस्तावः[१] सूक्तं सावित्रमुच्यते ॥१०३॥
पञ्चेमानि जगौ दृष्ट्वा[२] सूक्तान्याङ्गिरसो मुनिः ।
हिरण्यस्तूपतां प्राप्य[३] सख्यं चेन्द्रेण शाश्वतम् ॥१०४॥
आग्नेयं प्रेति मारुतं क्रौञ्चं[४] (क)त्रीणि पराण्यतः ।
सूक्तमुद्[५]ब्राह्मणस्यैवं यं स्तुवन्ति त्रयस्तृचाः ॥१०५॥
वरुणार्यममित्राणां मध्य आदित्यदैवतः ।
पौष्णं सपूषन्[६] षड्रौद्र्य[७]स्तृतीया न तु केवला ॥१०६॥
मित्रेण वरुणेनाच[८] विश्वैर्देवैश्च संस्तवः ।
उक्तमत्रर्षिणा पूर्व्वमादेशाद्दैवतं विना ॥१०७॥
ज्ञातुं न शक्यते लिङ्गात्तथापि क्वचिदुच्यते ।
आदित्या वसवो रुद्रास्त्वमग्न इति च स्तुताः ॥१०८॥
तृचः सौम्योऽग्न[९] आग्नेये प्रगाथेनाश्विनौ स्तुतौ ।

---

(१) रात्रिः स्तुता तृतीयेनेति ङ० ।
(२) दृष्ट्वेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) प्राप्तः इति ङ० ।
(४) क्रौञ्चमिति पुस्तकान्तरं ।
(५) उक्थिदेति ख० ङ० पुस्तकान्तरञ्च ।
(६) सम्पुष्यन्निति पाठो विशुद्धः ।
(७) पौष्णं संदग्ररौद्रकेति ङ० पुस्तकान्तरञ्च ।
(८) वरुणेनाग्नेति ख० ङ० पुस्तकान्तरञ्च ।
(९) सौम्यग्न इति पुस्तकान्तरं ।

---

(क) ऋ० १, २५, १ ।

सहोषसा लिङ्गभाजा वयं सोमः सुदानवः[१] ॥१०९॥

अर्धर्चौ देवदेवत्य एष इत्याश्विने परे।

आदित्यं मन्यते यास्को हविषेति[२] सहस्तुतं[३] ॥११०॥

सहोषसे ततः सौर्य्यमुदुत्यमिति संस्तुतम्।

भक्तिर्येन वरुणोघु रोगघ्नस्तृच उत्तमः ॥१११॥

रोगोपस्तुद्[४]माचाभ्यामुद्यन्नित्युत्तमे तृचे।

अर्धर्चे तु द्विषद्वेष ऐन्द्रः सव्यः[५] (क)शतर्चिषु ॥११२॥

स्वयमिन्द्रसमं पुत्रमिच्छन्तोऽङ्गिरसो मुनेः।

वत्सेव[६] सव्यो भूत्वर्षि[७] र्यंगिलात्पुत्रताङ्गतः ॥११३॥

प्रथमे मण्डले ज्ञेया ऋषयस्तु शतर्चिनः।

क्षुद्रसूक्तमहासूक्ता अन्त्ये मध्येषु मध्यमाः[८] ॥११४॥

---

(१) उक्तमन्त्रर्षिर्येत्यादि वयं सोमः सुदानवः इत्यन्तपाठः क॰ ग॰ घ॰ ध॰ चिह्नितपुस्तकेषु न विद्यते।

(२) हविषेति पुस्तकान्तरं।

(३) आदित्यमित्यादि श्लोकार्द्धं क॰ ग॰ घ॰ ध॰ चिह्नितपुस्तकेषु नोपलभ्यते।

(४) रोगापनुद्धीति ग॰, रोगापनुतिरिति ङ॰।

(५) अग्रर्षन्तु द्विषद्वेषदैन्द्राण्यस्तैति ग॰।

(६) वत्से चेति ख॰।

(७) भूत्वर्षैरिति क॰ ग॰ घ॰ ध॰।

(८) प्रथमे मण्डले ज्ञेयेत्यादि अन्त्ये मध्येषु मध्यमा इत्यन्तपाठः क॰ घ॰ ध॰ चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ॰ १, ८२, ५।

नवकं जातवेदस्यं नूचित्यन्तु वया इति।
वैश्वानरीयं तत्सूक्तमाग्नेयन्तु ततः परम्(१) ॥११५॥
ऐन्द्राण्यस्मै तत(२)स्तौषि तृष्णे ग्रर्धाय(क) मारुतम्।
आग्नेयानि तु पश्ये(ख)ति नवषट्कि वामिति(३) ॥११६॥
(४)दशाश्विनानीमानीति इन्द्रावरुणयोः स्तुतिः।
सौपर्णीयास्तु काश्चिच्च(५) निपात(६)स्तुतिषु स्तुताः ॥११७॥
उपप्रयन्तः(ग) सूक्तानि आग्नेयान्युत्तराणि षट्।
हिरण्यकेशो(घ) रजसस्तृचोऽग्नेर्मध्यमस्य तु ॥११८॥
इत्येति(७) पञ्च त्वैन्द्राणि(८) यामित्यस्यां निपातिताः।

---

(१) वह्निमाग्नेयमुत्तरमिति ख० ङ० पुस्तकान्तरञ्च।
(२) इन्द्रः इति ख०।
(३) नवषड्वैपदानि त्रिति ङ० पुस्तकान्तरञ्च।
(४) ङ० चिह्नितपुस्तके पुस्तकान्तरे च, दशाश्विनानीति श्लोकार्द्धस्याग्रे, उपान्त्यं समस्मेऽर्द्धर्चं न मैत्रावरुणं विदुरिति पाठोऽस्ति।
(५) याः काश्चिदिति ग० ङ० पुस्तकान्तरञ्च।
(६) निपाताः इति ङ० पुस्तकान्तरञ्च।
(७) इत्स्वेतीति ख० ङ० पुस्तकान्तरञ्च।
(८) चैन्द्राणीति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ३७, ४। (ख) ऋ० १, ६५, १। (ग) ऋ०१, ७४, १।
(घ) ऋ० १, ७९, १।

दध्य[क]ङ्ङनुरथर्वा च मारुतानि प्रये ततः ॥११९॥
चत्वार्य्यांनो[ख] वैश्वदेवे द्वे देवानां स्तुतिर्मता[१]।
आनोभद्राश्च देवानां भद्रं यावच्छतं पुनः ॥१२०॥
मधुवातास्तृचे तस्मिन् परमं मध्वपीष्यते।
आप्यर्या प्रश्न इत्येषां वैश्वदेवौ स्वगिष्यते[२] ॥१२१॥
[३]अदितिर्द्यौरिति त्वस्यां विभूतिः कथिता[४]दितेः।
त्वं सोमसौम्यमौपस्थ[५] मेता उख्यास्तृचोऽश्विनोः ॥१२२॥
अग्निनाग्नेश्च[६] सोमस्य अग्नीषोमाविति स्तुतिः[७]।

---

(१) चत्वार्य्यांन इति सूक्ते देवानां स्तुतिस्तरेति क॰ ख॰ ग॰ घ॰, चत्वार्य्यांनो इत्यत्र चत्वार्य्यामाविति ख॰।

(२) आनो भद्राश्च देवानामित्यादि वैश्वदेवौ स्वगिष्यते इत्यन्तपाठः क॰ ग॰ घ॰ लिखितपुस्तकेषु नोपलभ्यते।

(३) पुस्तकान्तरे, अदितिर्द्यौरिति श्लोकार्द्धं, आनो भद्राश्चेति श्लोकार्द्धात् परं पठितं।

(४) कथ्यते इति [illegible]॰ ख॰ पुस्तकान्तरच।

(५) मेधस्यमिति ख॰, मेधस्यमिति क॰ ग॰ घ॰।

(६) अग्निनाग्नेः सखेति क॰ ग॰ घ॰।

(७) विमं स्तुमे इति ख॰ पुस्तकान्तरच।

---

(क) ऋ॰ १, ८०, १६। (ख) ऋ॰ १०, ५५, ५।

गौतमादौशिजः[क] कुत्सपरुच्छेपादृषेः[१] परः ॥१२३॥
इमं कुत्स[ख] आङ्गिरसो ददर्श जातवेदसं जगाद षोडशर्चं।
पूर्वा देवा इत्यृचो देवदेवास्त्रयः पादा उत्तमायास्ततोऽर्द्धम् ॥१२४॥
तस्यैव वा यस्य तत्पूर्वमुक्तं मित्रादिभ्यो वाच[२] षड्भ्यः प्रकृताभ्यः।
अन्त्योऽर्धर्चः षण्णां स्तुतानां पूर्वा देवाः पादैः स्त्रिभिः स्तुताः[३] ॥१२५॥
भरद्वाजे गृत्समदे वसिष्ठे नोधस[ग] गव्ये विमदे नभाके[घ]।
कुत्सेनोदर्के[४] बहुदेवतेषु तथा द्विदेवेषु समानदेवधर्म्माः[५] ॥१२६॥

---

(१) गौतमो नाम य ऋषिः कुत्स आङ्गिरस इति क॰ घ॰ च॰।

(२) वाचेत्यत्र कुतापा इति क॰ घ॰, कुतापो इति च॰।

(३) ङ॰ चिह्नितपुस्तके पुस्तकान्तरे च,—

इमं कुत्स आङ्गिरसो ददर्श जातवेदसम्।
कुत्सादीर्घतमास्तेष्वमध्ये ताः स्वधीयते॥
पूर्व्वा देवास्ततो देवास्त्रिभिः पादैस्तु संस्तुताः।
षोडशर्चं तथा सूक्तं जगाद चतुरित्यसौ।
अन्त्येऽर्द्धर्चे तु वा मस्ता त्रिष्टोक्ताना स्तुतौ गया॥

इति पाठो वर्त्तते।

क॰ घ॰ च॰ चिह्नितपुस्तकेषु, कुत्सादीर्घतमाश्चेतीति श्लोकार्द्धस्थाने कुत्सादीर्घतमा इति ते द्वे एवमधीयते। इति पाठोऽस्ति। इतीत्यत्र ष्रत्स्वदिति ग॰।

(४) कुत्सेनोदर्केति क॰ घ॰ च॰।

(५) समानधर्म्मिणः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, १८, १। (ख) ऋ॰ १, १०६, ६। (ग) ऋ॰ २, ६१, १४। (घ) ऋ॰ ८, ४०, ४।

इमा रौद्रं ततः[१] सौर्य्यं चित्रं पञ्चाश्विनान्यतः ॥१२८॥
नासत्याभ्यामिति त्वन्ये अर्धर्गं दुःस्वप्ननाशिनी[२] ।
ऐन्द्रव[३]द्वैश्वदेवञ्च प्रोच्यते प्रथुरुत्तरे ॥१२९॥
स्वपिदानञ्च[४] भाव्यस्य[क] प्रातरित्यत्र शंसति ।
कक्षीवता[ख] विदित्वेति[५] यदैन्द्रमुपदिश्यते ॥१४०॥
परोक्षं वैश्वदेवं[६] तत् प्रदिष्टं स्वरसामसु ।
अधिगम्य गुरोर्विद्यां गच्छन् स्वनिलयं प्रति ॥१४१॥
कक्षीवानध्वनि श्रान्तः सुष्वापारण्यगोचरः ।
तं राजा स्वनयो नाम भावयव्यसुतो[७]व्रजन् ॥१४२॥
क्रीडार्थं सानुगोऽपश्यत् सभार्यः सपुरोहितः ।
अथैनं रूपसम्पन्नं दृष्ट्वा देवसुतोपमम् ॥१४३॥
कन्यादाने मतिं चक्रे वर्णगोत्राविरोधतः ।
सम्बोध्यैनं स पप्रच्छ वर्णगोत्रादिकं तदा ॥१४४॥
राजन्नाङ्गिरसोऽस्मीति कुमारः प्रत्युवाच तम् ।

---

(१) यदमिति क॰ ग॰ च॰ ।
(२) त्वन्येत्या दुःस्वप्ननाशिनीति क॰ ग॰ घ॰ च॰ ।
(३) ऐन्द्रकदिति ङ॰, ऐन्द्रं चेति च॰ ।
(४) त्विति ङ॰ ।
(५) कक्षीवतं कदित्यावीति क॰ ग॰ घ॰ च॰ ।
(६) परोक्षे वैश्वदेवे इति ङ॰ ।
(७) भावयव्यसुत इति ङ॰ ।

---

(क) ऋ॰ २, १२६, १ । (ख) ऋ॰ १, ११७, ६ ।

पुत्त्रोऽहं दीर्घतमस औचथ्यस्य(क) ऋषेर्नृप[१] ॥१४५॥
अथास्मै स ददौ कन्यां[२] दिव्याभरणभूषिताम्[३] ।
तावतश्च रथानश्वान् वीवह्नान् वै[४] चतुर्युजः ॥१४६॥
वधूनां वाहनार्थाय धनकूप्य[५]मजाविकम् ॥
निष्काणां वृषभाणाञ्च[६] शतं शतमदात्पुनः ॥१४७॥
गवां सहस्रं षष्टीश्च सर्व्वाः स्वलरिधायसः[७](ख) ।
शतमश्वाञ्छतं निष्कान्रथान् दशवधूमतः ॥१४८॥
चतुर्युजो गवाश्चैव सहस्रं षष्ट्याधिकम्[८] ।
स्वनयाद्भावयव्याच्च कक्षीवान् प्रत्यपद्यत ॥१४९॥
प्रतिगृह्य च तुष्टाव प्रातः[९] पित्रे शशंस च ॥
एतदुत्तरसूक्तेन शतमित्यादिनोदितम्[१०] ॥१५०॥

---

(१) राजन्नाङ्गिरसोऽस्मीत्यादि चौचथस्य ऋषेर्नृपेत्यन्तपाठः ङ० चिह्नितपुस्तके न दृश्यते ।
(२) कन्या इति ङ० ।
(३) रत्नभारसमन्विताः इति ङ० ।
(४) रथाश्वांश्च दीपिनोऽश्वैरिति ङ० ।
(५) धनं कूप्यमिति ङ० ।
(६) निष्काणां शतमश्वानामिति ङ० ।
(७) गवां सहस्रमिति श्लोकार्द्धं ङ० चिह्नितपुस्तके न विद्यते ।
(८) षष्ट्युपाधिकमिति ङ० ।
(९) ततः इति ङ० ।
(१०) ङ० चिह्नितपुस्तके, एतदुत्तरसूक्तेनेति श्लोकार्द्धस्थले, एतत्तदुत्तरे सूक्ते शतमित्यादि चोच्यते इति पाठोऽस्ति, शतमश्वाञ्छतं निष्कानिति श्लोकार्द्धात्प्राक् पठितश्च ।

---

(क) ऋ० १, १५८, १ । (ख) ऋ० १, १२६, ५ ।

फलप्रदर्शनं तस्य क्रियते प्रायशस्त्विह ।
द्वितीयान्तु पितापश्चात्सुगु[क]रित्यादिकान्तृचम् ॥१५१॥
कक्षीवतं[१] सर्व्वमिति भगवानाह शौनकः ।
एषा तु दैर्घतमसी सानुक्रिया कथं भवेत् ॥१५२॥
उचथ्ये मातरि[ख]सूक्ते स्वनोदानेन हर्षितः।
राजस्याभिषमादाय स्वगुरित्यादिना किल[२] ॥१५३॥

कर्माणि याभिः कथितानि राज्ञां[३]
दानानि चोच्चावचमध्यमानि ।
नाराशंसी[ग]रित्यृचस्ताः प्रतीया-
द्याभिः स्तुतिर्दानपतीषु राज्ञां[४] ॥१५४॥
पश्चामन्दान् भावयव्यस्य गीता
जायापत्योर्द्वौ ऋचौ सम्वादः[५] ।

---

(१) काक्षीवतमिति पाठः समीचीनः।
(२) अभिगम्य गुरोर्विद्यामित्यादि स्वगुरित्यादिना किलेत्यन्तपाठः क० ग० घ० चिह्नितपुस्तकेषु न विद्यते। फलप्रदर्शनं तस्येत्यादि स्वगुरित्यादिना किलेत्यन्तपाठोऽपि ख० ङ० चिह्नितपुस्तकयोर्न दृश्यते।
(३) कर्माणि यावन्ति कृतानि राज्ञेति ङ०।
(४) प्रतीयात् स्तुतौ दृष्टा यासु वरिष्ठराज्ञामिति ट० पुस्तकान्तरञ्च।
(५) सम्वादो दृष्टेनेति क० ग० घ०।

---

(क) ऋ० १, १२५, २। (ख) ऋ० १, १, ४। (ग) १०, ८५, ६।

BIBLIOTHECA INDICA,

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

New Series, No 760



# बृहद्देवता ।

# BRIHADDEVATA

## AN INDEX TO THE GODS OF THE RIG VEDA

BY

SAUNAKA ACHARYA

EDITED BY

RAJENDRALALA MITRA C I E LL D

FASCICULUS II

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS

AND PUBLISHED BY THE

ASIATIC SOCIETY 57 PARK STREET

1890

सभ्यवादं रोमशये[क]न्द्रराज्ञो-
रेते तृचौ[1]मन्यते शाकपूणिः ॥१५५॥
इन्द्रेण जायापत्योरेतिहासं
[2]तृचेऽस्मिन्मन्यते शाकटायनः।
प्रादात्सुतां[3] रोमशां नाम भाव्या
बृहस्पतिर्भावयव्याय राज्ञे ॥१५६॥

इति बृहद्देवतायां तृतीयोऽध्यायः॥

---

(१) सभ्यवादमस्यस्या ष्वय चैव ताभ्यामेते तृचौ इति ख० ट०
पुस्तकान्तरस्थ०।

(२) तृचे इति ग०।

(३) स तामिति ख० ङ०।

---

क) ऋ० १, १२६, ७।

# अथ चतुर्थोऽध्यायः ।

ततस्त्व[1]मर्यं हरिवान्[क]विदित्वा
प्रियं सखायं स्वनयं दिदृक्षुः ।
अभ्याजगामाशु शचीसहायः
प्रीत्यार्घ्यंयत्तं[2] विधिनैव[3]राजा ॥ १ ॥
अभ्याजगामाङ्गिरसी च तत्र
दृष्ट्वा[4]तयोः सा चरणौ च वन्दे ।
इन्द्रः सखिलाद्य तामुवाच
रोमाणि ते सन्ति न सन्ति राज्ञि ॥२॥
सा बालभावादथ तं जगाद
उपोपमे ब्रह्म परामृशेति ।
तां पूर्वयत्नाय नृपः प्रहर्षा-
दभ्यजल्पोऽथ पतिं तु साऽब्रवीत्[5] ॥३॥

(१) तत्त्वमिति ख० ङ० पुस्तकान्तरेषु ।
(२) प्रत्यर्चितं तमिति ख० ।
(३) प्रत्यर्चितोऽसौ विधिना चेति ग० पुस्तकान्तरेषु ।
(४) दृष्ट्वेति ख० ग० पुस्तकान्तरेषु ।
(५) तां पूर्वया सान्त्वनृपः प्रहृष्टोवाच प्रजल्पाय पतिं पतिव्रतेति क० ग० घ० ।

(क) ऋ० १, ८२, ४ ।

अथाग्नेये अग्निमित्युत्तरे य-
त्पञ्चैन्द्राणि प्रत[क]दैन्द्र्यृगच[1]।
युवन्त[ख]मिन्द्रापर्वतौ[ग] यत्र स्तुता-
विन्द्रन्तु मेने यास्क एकं प्रधानं[2] ॥४॥
ऋ्येतद्युः पर्वतो विद्धि वज्रो[3]
द्विवस्तुतौ चेन्द्रमाह[4] प्रधानं।
आत्वावेर्योरथ पञ्चेन्द्रवाय्वो[5]रेका
वायोरुत्तरं द्विप्रधानं ॥५॥
तत्र पञ्चवरुणं मित्रदेवा
दिवादिभ्यः[6] कथिताभ्यः परे द्वे
द्वे द्वे पदे संस्तुते[7] रोदसी च
देवाश्चार्धर्चेन विभक्तमन्यत् ॥६॥

(१) अग्निमाग्नेये अत उत्तराणि पञ्चैन्द्राणि प्रतदैन्द्र्यृगेकेति ख० पुस्तकान्तरञ्च।
(२) त्विन्द्रन्तु मेन इह यास्कः प्रधानमिति क० ग० घ०।
(३) ऋत्वृस्तुतः पर्वतद्धि यज्ञः इति क० ग० घ०।
(४) चन्द्रमाङ्करिति क० ग० घ०।
(५) आत्वानवपञ्चेन्द्रवाय्वोरिति क० ग० घ०, आत्वावायोरथाथ पञ्चेन्द्र-वाय्वोरिति ग०।
(६) दिभ्य आद्याः इति ङ०।
(७) द्वे वामरे संस्तुताविति ङ०।

(क) ऋ० ८, १२, २७। (ख) ऋ० ८, ७१, ४। (ग) ऋ० ३, ५३, १।

मैत्रावरुणं सुसुमे(क)ति सूक्तं(१)
प्रप्र(ख)पौष्णं वैश्वदेवं द्वितीयं(२)।
एतत्सूक्तं(३) वैश्वदेवं तृतीयं
वैश्वदेवं स्या(४)द्बहुदेवतेषु ॥७॥
बहुशस्तु वैश्वदेवेषु संस्तवः(५)
अर्धर्चा(६) द्वैपदास्त्रैपदाश्च।
द्विप्रधाना अपि चैकप्रधाना
बहुप्रधाना अपि वैश्वदेवाः(७) ॥८॥
वैश्वदेवी मित्रावरुणी द्वितीया
तिस्रोऽश्विभ्यां सप्त ऐन्द्री ततोऽग्नेः।
मारुत्येका सप्त ऐन्द्राण्यनन्तरा
बार्हस्पत्या चोत्तमा स्तौति देवान् ॥९॥

---

(१) सुसुमेतीह सूक्तमिति ख०, ग० ङ० पुस्तकान्तरञ्च।
(२) तृतीयमिति क० ख० घ०।
(३) अस्तु श्रौमदिति ङ०।
(४) वैश्वदेवं हि स्यादिति ङ०।
(५) सम्प्लुषः इति क० ख० घ०।
(६) अर्धर्चाविति क० ख० घ०।
(७) अपि ता वैश्वदेव्यः इति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १३७, ६। (ख) ऋ० १, ४०, ७।

ऋषीनृषिर्वा स्तौति दध्यङ्मेऽस्या-
मात्मानं वा तेषु यं सन्तजन्म[1]।
तस्मादृचं विप्रवदन्ति केचित्
इन्द्राग्नी तस्यां तु[2] निपातभाजौ ॥१०॥
द्वावुचथ्य[क]वृहस्पती ऋषिपुत्रौ वभूवतुः।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥११॥
तां यवीयान्[3] वृहस्पतिर्मैथुनायोपचक्रमे।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यषेधत[4] ॥१२॥
इहास्मिन् पूर्वसम्भूतो न कार्यः शुक्रसङ्करः।
तच्छुक्रप्रतिषेधं तु न ममर्ष वृहस्पतिः[5] ॥१३॥
स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥१४॥
स जातोऽप्यतप[6]ल्लोकानेतस्मा[7]दन्धतां गतः।

---

(१) एवाथर्व्वाणः स्तौति प्रशंस जन्मेति क० ख० घ०। एवाथर्व्वाण इत्यत्र ऋङ्मेवाथर्व्वाणः इति ग०।
(२) केचिदैन्द्री त्वेवेति क० घ० च०।
(३) कनीयानिति क० घ० च०।
(४) प्रत्यभाषतेति क० ग० घ० च०।
(५) तं शुक्रप्रतिष्ठानं तु वृहस्पतिरमर्षयदिति ङ०।
(६) अभ्यतपदिति ख० घ०, अभ्यवददिति ग० ङ० पुस्तकान्तरञ्च।
(७) अकस्मादिति ख० ग० ङ०।

---

(क) ऋ० ८, ४६, २८।

दद‍ुर्देवा स्तुता नेवे ततोऽनभ्यो वभूव च[1] ॥१५॥
स वेदिषद् इत्यस्तौ[2]च्चतुर्भिर्जातवेदसं।
समिद्ध आप्रियोऽन्त्यैन्द्री तमित्यग्नेः पराणि षट्[3] ॥१६॥
स्तुतौ तु मित्रावरुणौ सूक्तेर्मित्रमिति त्रिभिः।
मित्रं मैत्री वदत्येता[4] मायेनवरु प्रंसति ॥१७॥
अदितिं वाथ वाप्यग्निं तथा रूपं हि दृश्यते।
अग्निं मेने दितिं त्वेव कुत्से चेह[5] च शौनकः ॥१८॥
ऋषिरत्र प्रवह्लादा दर्भेनादानुकीर्तयेत्[6]।
विष्णोर्नुकमिति चौणि वैष्णवानि पराण्यतः ॥१९॥
प्रवः पान्तं चतुर्भिस्तु[7] इन्द्राविष्णू सह स्तुतौ।
ऋचाणि वा वैष्णवानि ऋषिरस्तेत्यृचि[8] कांषति ॥२०॥

---

(१) तु तस्मात्स्रौ मैते न सम्यतां गत इति क॰ ख॰ च॰।

(२) इत्याद्यैरिति ङ॰।

(३) आप्रः परैन्द्री षड्भिः त्वग्निं तमित्यत इति क॰ ख॰ च॰, आप्रि॰ योऽन्त्यैन्द्री मारुतावाग्नेः पराणि चेति ग॰।

(४) मैत्रीव देवतामिति ङ॰।

(५) यास्कः कुत्सो वेदेति ङ॰ पुस्तकान्तरच।

(६) ऋषिरग्नेः प्रवह्लादाद्दर्भमौनन्यकीर्तयदिति ङ॰।

(७) प्रवयतस्त्वमिन्द्रमिरिति ग॰, ताभ्यां घतस्त्वमिन्द्रमिरिति ङ॰ पुस्तकान्तरच।

(८) ताभ्यामित्यृचीति ग॰ ङ॰ पुस्तकान्तरच।

जीर्णन्तु दीर्घतमसं क्षिप्तास्तत्परिचारिणः[१] ।

दासा अथ[२] नदीतोये दृष्टिहीनमुपादधुः[३] ॥२१॥

तत्रैकस्त्रैतनो[४][क] नाम क्षुरेणैनमपाहनत् ।

शिरस्यंसावुरश्चैव स्वयमेव न्यकृन्तत[५] ॥२२॥

अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्क्षिपन्[६] ।

[७]अजनयामास चोत्थाय[८] कक्षीवत्प्रमुखानृषीन् ॥२३॥

---

(१) तत्परिचारकाः इति ख० ङ० पुस्तकान्तरञ्च ।

(२) दासा बद्धेति क० ग० च० ।

(३) अवादधुरिति क० ग० च० ।

(४) त्रैतनः इति क० ग० च० ।

(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

कृत्वा दीर्घतमाक्तं तु पापेन महता हतम् ।

आत्माङ्गान्यशुरश्चैव ततोऽसाम्नोक्षितो भ्रमम् ॥

इत्यधिकं पठितम् ।

(६) तं नृपं समुदक्षिपदिति ङ० पुस्तकान्तरञ्च ।

(७) जनयामास चोत्थायेति श्लोकार्द्धात्प्राक्, ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

अङ्गराजमहिषे युक्ता सुष्मिजं पुत्रकाम्यया ।

राज्ञा च प्रहितां दासीं भक्तां मत्वा महातपाः ॥

इत्यधिकं पठितम् ।

(८) सोऽजीजनदृषसेकादिति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १,।१५८, ५ ।

तुष्टाव चैव सूक्ताभ्या[1]मवोचीत्यश्विनादृषिः ।
प्रेति द्यावापृथिव्यौ तु[2] पराभ्यामेतदुत्तरं ॥२४॥
किमाभवं परं[3] मानो मेध्यस्याश्वस्य संस्तवः ।
ईमां[क]ता म इति त्वष्टा नीयमानं प्रशंसति ॥२५॥
स्वयूथ्यास्तस्य चैवात्र बहवः संस्तुता हयाः ।
नियुक्ताश्चानियुक्ताश्च प्रसङ्गादनुकीर्त्तिताः ॥२६॥
संज्ञप्तवदसंज्ञप्तं हविष्यं[ख] चाह सूनवः[4] ।
तस्मिन्मांसस्य सूनस्य चतुष्टां हविषस्तथा[5] ॥२७॥
वासोऽधिवाससोश्चाथ स्वधिते[ग]श्च प्रकीर्त्तनं[6] ।
गात्रशूलश्रूपाणा[घ]श्च[7] स्वधितेश्च प्रकीर्त्तनं[8] ॥२८॥

(१) वेति वस्तुताभ्यामिति ङ० पुस्तकान्तरञ्च ।
(२) द्यावापृथिव्यातेति ङ० पुस्तकान्तरञ्च ।
(३) परे इति ङ० पुस्तकान्तरञ्च ।
(४) भविष्यं चाह भूतवत् इति ख० ङ० पुस्तकान्तरञ्च ।
(५) चतुर्थी हविषस्तथेति ग०, तत्मीभक्तं च मांसस्य चतुर्थ्यां च विधान्तथेति ङ० पुस्तकान्तरञ्च ।
(६) यविषस्तथ कीर्त्तितमिति ख० ग०, वासाधिवाससोश्चाथ यष्टीभस्य च कीर्त्तनमिति ङ० ।
(७) गात्रशूलस्नुषायाश्चेति ख० ङ० ।
(८) क० ग० घ० चिह्नितपुस्तकेषु, गात्रशूलस्नूणाश्चेतिश्लोकार्द्धं न पठितम् ।

(क) ऋ० ४, २७, २ । (ख) ऋ० १, १६२, ४ । (ग) ऋ० १, १६२, १८ । (घ) ऋ० ५, ६२, ७ ।

भागस्य[१] कीर्त्तनं चात्र इन्द्रापूष्णोः सह स्तुतिः[२] ।
सूक्तं यदस्य[३] वामीयं वैश्वदेवं तदुच्यते ॥२९॥
प्रवादा विविधास्तत्र देवानां चात्र कीर्त्तनं ।
अग्निस्तु वामः पलितो[क] वायुर्भ्राता तु मध्यमः ॥३०॥
*इतस्तृ*[ख]*तीयोऽत्र*[४] *सप्त वै रश्मयस्तु ताः ।*
परास्तु कथयन्त्यग्निं[५] यथा वर्षति पाति[६] च ॥३१॥
अहोरात्रदिना[७]मासानृतूंश्च परिवर्त्तनं[८] ।
पञ्चधा त्रिविधा[९] चैव षोढा द्वादशधैव च[१०] ॥३२॥
संवत्सरं चक्रवच्च पराभिः कौर्त्तयन्नृषिः ।

---

(१) भागस्येति ग॰ ख॰
(२) इन्द्रापूष्णोश्च कीर्त्तनमिति ख॰ ङ॰ ।
(३) यदस्येति ङ॰ ।
(४) तृतीयोऽत्र॰ इति ङ॰ ।
(५) अग्निरिति ङ॰ ।
(६) वातीति ख॰ ङ॰ ।
(७) अहोरात्रान् दिनानिति ङ॰ ।
(८) पञ्चाश्च परिकीर्त्तनमिति ङ॰ ।
(९) पञ्चधा च त्रिधेति ख॰ ङ॰ ।
(१०) द्वादशधापि वेति ङ॰ ।

---

(क) ऋ॰ १, १६४, १ । (ख) ऋ॰ १, १६४, १ ।

चनश्चानं[१] च धेनुञ्च गौरीं वाचं सरस्वतीं ॥२३॥
धर्म्मं पूर्व्वयुगीयञ्च[२] साध्यान् देवगणांस्तथा।
विविधानि च कर्म्माणि त्वग्निवायुविवस्वताम् ॥२४॥
विभूतिमग्नेर्वाय्वोश्च जगती स्थान[३]जङ्गमे।
हरणं रश्मिभिश्चैव[४] विसर्गं[५] पुनरेव च ॥२५॥
कर्म्मानुकीर्तनञ्चाथ[६] पर्जन्याग्निविवस्वतां।
मातापुत्रौ च वाक्प्राणौ माता वागितरः सुतः ॥२६॥
सरस्वन्तमिति प्राणा[७] वाचं प्राहुः सरस्वतीं।
शरीरमिन्द्रियैर्युक्तं चेत्रमित्यभिधीयते ॥२७॥
वेद तत्प्राण[८] एवैकस्तस्मात् क्षेत्रज्ञ उच्यते।
मेघः[९] शक[क] स्तस्य धूमः[१०] सलिलं वास एव वा ॥२८॥

---

(१) क्षेमश्चानमिति ग॰, क्षेमं चानमिति ङ॰।
(२) पूर्व्वयुमागाचेति ख॰ ङ॰, धर्म्मपूर्व्वयुगौ पचेति ग॰,
(३) जगति स्थास्विति ख॰ ङ॰।
(४) वारः इति ख॰, वारामिति ङ॰।
(५) विसर्पमिति ख॰।
(६) चास्मिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(७) प्राणः इति क॰ ग॰ घ॰ च॰।
(८) वेत्त्येतत्प्राय इति ङ॰।
(९) मेघे इति ख॰।
(१०) धूमे इति ख॰।

---

(क) ऋ॰ ८, ८०, ३।

सोम उग्रा(क)भवन्नस्य पावकास्य त्रयोऽधिपाः।
गौरीरं तं वैश्वदेवमुपरि स्यात्पृथक् स्तुतिः ॥३९॥
इन्द्रं मित्रमिमौ सौर्य्यौ सौरी चान्या सरस्वते[१]।
मारुतेन्द्रस्तु संवादः कयेति[२] परमः स्तुतः[३] ॥४०॥
मरुतामयुज[४]स्त्वैन्द्रो युग्माः सर्व्वाः[५] यथान्यया।
एकादशी प्रथमा च मारुतस्तृच उत्तमः[६] ॥४१॥
तृचस्यैव तु तत्रोक्तं कर्त्तृत्वमितरस्य तु।
इतिहासं पुरावृत्तमृषिभिः परिकथ्यते[७] ॥४२॥
समागच्छन्मरुद्भिस्तु[८] चरन् व्योम्नि शतक्रतुः।

(१) क० ख० ग० घ० पुस्तकेषु, मेघः शकलस्य धूम इत्यादि सौरी चान्या सरस्वते इत्यन्तपाठो न विद्यते, तेषु च तत्र स्थले,—
सूक्तमस्यपरन्तं लितमृचामभेव प्रशंसति।
प्रवादबहुलत्वाच्च ततः खिलमुच्यते॥
इति पाठो वर्त्तते।
(२) कयेतीति ख०।
(३) ततः इति ख० ङ०।
(४) मरुतः इति ङ०।
(५) तत्रेति ङ०।
(६) उत्तरः इति ग०, मारुत्यस्तिस्र उत्तरा इति ङ० पुस्तकान्तरस्य।
(७) तृचस्यैव तु तत्रोक्तमित्यादि ऋषिभिः परिकथ्यते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(८) चेति ख० ङ०।

(क) ऋ० १, १४६, २।

दृष्ट्वा तुष्टाव तानिन्द्रस्तेनैन्द्र(१)मृषयोऽब्रुवन् ॥४३॥
तेषामगस्त्यः संवादं तपसा वेद(२)तत्त्वतः ।
स तानभिजगामाशु निरूप्यैन्द्रं हविस्तदा ॥४४॥
मरुतश्चाभितुष्टाव सूक्तैस्तदिति च(३) त्रिभिः(४) ।
मघश्चिदिति चैवेन्द्रं सहस्रमिति चैतया(५) ॥४५॥
निरुप्तं तद्धविश्चैन्द्रं मरुद्भ्यो दातुमिच्छति(६) ।
विज्ञायावेक्ष्य तद्धव्यं त्विन्द्रो(७) नेति तमब्रवीत्(८) ॥४६॥
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतं ।
कस्यचित्त्वथ सञ्चारे(९) चित्तमेव विनश्यति ॥४७॥
किम्न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव ।
मरुद्भिः सम्प्रकल्पस्व(१०)वधीर्मा च(११) शतक्रतो ॥४८॥

---

(१) ते चैन्द्रमिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(२) तपसावोधीति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(३) तन्विति त्रिति क॰ घ॰ च॰ ।
(४) तन्विति पञ्चभिरिति ग॰ ।
(५) मघश्चिदित्यनेनैन्द्रं सहस्रं त त्र्यचाद्ययमिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) इच्छथेति ख॰, इच्छतः इति ङ॰ पुस्तकान्तरञ्च ।
(७) तद्भावमिन्द्रः इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(८) ततोऽब्रवीदिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(९) त्वथंसञ्चारे इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(१०) सम्प्रकल्पस्वेति ख॰ ङ॰ ।
(११) मा नः इति ख॰ ङ॰ पुस्तकान्तरञ्च ।

किं नो भ्रातरिति त्वस्मिन्द्रो मान्यमुपालभत् ।
अगस्त्यस्त्वरमित्यस्यां क्षुब्ध[१]मिन्द्रं प्रशामयत्[२] ॥४८॥
प्रादात्संवननं[३] कृत्वा तेभ्य एव च तद्धविः ।
पूर्व्वया सान्त्वयन्निन्द्रो ह्यगस्त्यं स्नेहकाम्यया ॥५०॥
एवं संवननं कृत्वा प्रादात्तेभ्यः स तद्धविः[४] ।
सुते[५] चकार सोमे च[६] तानिन्द्रः सोमपीथिनः[क] ॥५१॥
तस्मादिष्याभिपातेन[७] ऐन्द्रेषु[८] मरुतस्तु तान्[९] ।
प्रीतात्मा पुनरेवर्षिस्तांस्तुष्टाव पुनः पृथक्[१०] ॥५२॥
मरुतः प्रेति सूक्ताभ्या[११] मिन्द्रं षड्भिः परैस्तु सः[१२] ।

---

(१) क्रुद्धमिति ख० ङ० पुस्तकान्तरञ्च।
(२) प्रसादयदिति ख० ङ०. प्रसाधयदिति पुस्तकान्तरम्।
(३) सङ्गमनमिति क० ग० घ० च०।
(४) पूर्व्वया सान्त्वयन्निन्द्र इत्यादि स तद्धविरित्यन्तपाठः, क० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(५) स्तुते इति ग०।
(६) सोमेऽथेति ख० ङ० पुस्तकान्तरञ्च।
(७) निपातेष्विति ङ० पुस्तकान्तरञ्च।
(८) मन्द्रेष्विति ख०।
(९) मरुतः स्तुताः इति ङ० पुस्तकान्तरञ्च।
(१०) पृथक् पृथगिति ख० ङ० पुस्तकान्तरञ्च।
(११) प्रतिसूक्ताभ्यामिति ख० ङ० पुस्तकान्तरञ्च।
(१२) गायन् षड्भिः शचीपतिरिति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, १५, ८।

ऋतुस्नाता(१) मृषिर्भार्यां लोपामुद्रां यशस्विनीं ॥५३॥
उपजल्पितुमारेभे रहःसंयोगकाम्यया ।
द्वाभ्यां सा त्वब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितं ॥५४॥
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ।
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ॥५५॥
उक्तैनं(२) कृतवानस्मिन्(३) ब्रह्मचार्युत्तमे अगौ ।
प्रशंस्य(४) तं परिष्वज्य गुह्य मूर्ध्न्यवजिघ्रतुः ॥५६॥
स्निग्धैनमाहतुश्चोभावनागा असि(५) पुत्रक ।
युवो(क)रजांसीति ततः सूक्तैः पञ्चभिरश्विनौ ॥५७॥
अगस्त्य एव तुष्टाव सूक्तेन कतरे तु(६) ।
द्यावापृथिव्यौ सूक्तेन स्वानो विश्वान् दिवौकसः ॥५८॥
पितु(ख)मन्नं समिद्धाग्न्यो अग्निमग्ने नयेति च(७) ।
बृहस्पतेरनर्वाणं(ग) कंकतोपनिषत्परं(८) ॥५९॥
अपां तृणानां सूर्यस्य केचिदेतां स्तुतिं विदुः ।

---

(१) ऋतौ स्नातामिति क॰ घ॰ च॰ ।
(२) न स्नेनः इति ख॰ ग॰, नस्तैतदि ङ॰ पुस्तकान्तरञ्च ।
(३) चक्षीति ख॰ ग॰ ङ॰ ।
(४) प्रशस्येति ग॰ ङ॰ ।
(५) चोभौ स्नानागोऽसीतीति क॰ ग॰ घ॰ च॰ ।
(६) कतरेति परैष त्विति क॰ घ॰ च॰, सूक्तेन कतरेति त्वि ङ॰ ।
(७) समिद्धो ह्यग्निर्योऽपे च यथामये इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(८) परेति ख॰ ङ॰ पुस्तकान्तरञ्च ।

---

(क) ऋ॰ १, ३४, १ । (ख) ऋ॰ १, ६१, ७ । (ग) ऋ॰ २, २७, १ ।

ददर्श तदगस्त्यो वा[१] विषण्णं विषण्णकथा ॥६०॥
अदृष्टास्यो विश्वरूपः[२] सूक्तस्यांशोऽत्र तु त्यृचः[३] ।
अस्तौ[४]दृत्समदोऽग्निं त्वं[५] जातवेदस[६]मात्प्रियः ॥६१॥
यज्ञेनाथ समिद्धोऽग्निरतोऽग्निं[७] सप्तभिर्ऊवे[क] ।
संयुज्य[८] तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः ॥६२॥
अदृश्यत मुहूर्त्तेन दिवि च व्योम्नि चेह च ।
तमिन्द्रमिति मत्वा तु[९] दैत्यौ भीमपराक्रमौ ॥६३॥
धुनिश्च चुमुरिश्चैव[१०] सायुधावभिपेततुः ।
विदित्वा स तयोर्भावमृषिः[११] पापचिकीर्षतोः ॥६४॥
यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत् ।

(१) त्विति ख० ङ० पुस्तकान्तरञ्च ।
(२) अदृष्टास्यो गदरूप' इति ख० ङ० पुस्तकान्तरञ्च ।
(३) त्र्यृचः इति ग० ।
(४) स्तौतीति ङ० पुस्तकान्तरञ्च ।
(५) अमित्वमिति ग० ङ० ।
(६) जातवेदस्यमिति ख० ग० ।
(७) चातोऽग्निमिति क० ग० च०, अमिरिति ङ० ।
(८) संयोज्येति ख० ङ० पुस्तकान्तरञ्च ।
(९) तौ इति ङ० ।
(१०) चोभाविति ख० ङ० पुस्तकान्तरञ्च ।
(११) ह्यृषिरिति क० ग० घ० ।

(क) ऋ० १, १७, ७ ।

उक्तेषु[1] कर्मस्वैन्द्रेषु भीस्तावाप्नु विवेश ह[2] ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्तयत् ।
निवृत्य तौ गृत्समदमृषिं[3] शक्रोऽभ्यभाषत ॥६६॥
यथेष्टं मास[4]खे पश्य प्रियस्त्वं[5] स्वागतोऽसि[6] मे ।
वरं वृणीष्व मत्तस्त्वमक्षयं[7] चास्तु ते तपः ॥६७॥
प्रह्व[8]स्तं प्रत्युवाचर्षिरस्माकं वदतां वरः[9] ।
तनूनामस्तु चारिष्टिर्वाक्चास्तु हृदयङ्गमा ॥६८॥
सुवीरा[क]रयिमन्त[ख]श्च वयन्त्वामिन्द्र धीमहि[10] ।
इन्द्र[11]त्वाञ्च विजानीमो वयं जन्मनि[12] जन्मनि ॥६९॥

---

(१) कीर्त्तिष्विति क० ग० घ० ।
(२) भीतौ समुपतुस्तदेति ख० ग० पुस्तकान्तरञ्च ।
(३) इदमिति ग० पुस्तकान्तरञ्च ।
(४) मासमिति पाठः सङ्गतः ।
(५) मास खे पश्य प्रियस्त्वमिति क० ग० घ० । अथ, मासं खे पश्यं प्रियस्त्वमिति पाठो विशुद्धः ।
(६) प्रियत्वं चागतोऽसीति ग० ।
(७) मत्त्वाक्षयमिति क० ग० घ० ।
(८) प्रह्वः इति क० ग० घ० ।
(९) वरेति क० ग० घ० च० ।
(१०) इन्द्र यामहे इति ख०, इन्द्रमीमहे इति ग० ।
(११) इन्द्रमिति ग० ।
(१२) ध्नमीति क० ग० घ० च० ।

---

(क) ऋ० ३, १६, ५ । (ख) ऋ० १०, ७४, १ ।

त्वद्गत(१)श्चैष मे भावो मापगास्त्वद्रथीतरः(२) ।
निरुक्तं तदिदं चार्षमिन्द्रश्चैवान्वृचान्यया ॥७०॥
वव्रे वरमिदं सर्व्वं तदाकर्ण्य शचीपतिः(३) ।
तथेत्युक्त्वा तुराषाट् त्वां(४) पाणौ जग्राह दक्षिणे ॥७१॥
ऋषिश्चास्य सखित्वेन पाणिना पाणिमस्पृशत् ।
सहितौ जग्मतुश्चैवं महेन्द्रसदनं(५) प्रति ॥७२॥
तत्रैनमार्च्चयत्प्रीत्या स्वयमेव पुरन्दरः ।
कर्म्मणा विधिदृष्टेन तमृषिस्त्वाभ्यपूजयत्(६) ॥७३॥
सखित्वाच्च पुनस्त्वेन(७)मुवाच हरिवाहनः ।
गृणन्मादयसे यस्मात्त्वमस्मानृषिसत्तम ॥७४॥
तस्माद्गृत्समदो नाम शौनहोत्रो(८) भविष्यसि ।
ततो द्वादशभिः सूक्तैस्तुष्टावेन्द्रं श्रुधी(९)(क)त्यृषिः ॥७५॥

---

(१) त्वा तत इति क० ग० घ० ।
(२) माप्रगाश्च रथीतरः इति ङ० पुस्तकान्तरञ्च ।
(३) निरुक्तं तदिदं चार्षमित्यादि तदाकर्ण्य शचीपतिरित्यन्तपाठः, क० ग० घ० ङ० चिह्नितपुस्तकेषु, नोपलभ्यते ।
(४) त्वामित्यत्र तमितिपाठः शुद्धः। रथाङ्गुल्विति ख० ङ० पुस्तकान्तरञ्च ।
(५) महेन्द्रभवनमिति ख० ङ० पुस्तकान्तरञ्च ।
(६) चाभ्यपूजयदिति क० । तमृषिं चाभ्यपूजयदिति ख० ग० घ० ङ० ।
(७) एवमिति पुस्तकान्तरम् ।
(८) शौनकोऽत्र इति ख० ।
(९) इन्द्रश्रुधीत्यृषिरिति क० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, २५, १९ ।

ददर्श संस्तुवन्नेव तत्र स ब्रह्मणस्पतिम्।
बृहस्पतिं तु तुष्टाव दृष्टलिङ्गाभिरेव च[१] ॥७६॥
स तमप्यभितुष्टाव[२] चतुर्भिरत[३] उत्तरैः।
गणानां विश्वमित्यस्यां[४] सहेन्द्राब्रह्मणस्पती ॥७७॥
बृहस्पतिं प्रसद्वादा[५] ब्रह्मणस्पतिमेव च[६]।
तुष्टाव कर्मणैकेन प्रभावस्यान्तरन्तयोः[७] ॥७८॥
मित्रावरुणदृचांमतुविजात[क]भगार्य्यम्णाम्[८]।
आदित्यानामिमाः [९]सूक्तमिदं वारुणमुच्यते[१०] ॥७९॥

---

(१) बृहस्पतिन्तु तुष्टाव दृष्टि लिङ्गस्तवै सहेति ख०, दृष्टलिङ्गस्तवैः सहेति छ०।
(२) अभ्यभितुष्टावेति क० ख० ग० पुस्तकान्तरञ्च।
(३) चतुर्भिरिति उत्तरैरिति ग०, चतुर्भिरित उत्तरैरिति छ०, चतुर्भिरेत उत्तरैरिति पुस्तकान्तरम्।
(४) अस्या इति छ०, विश्वामित्रस्येति ख०।
(५) प्रसक्तत्वादिति ख० घ०।
(६) ब्रह्मणस्पतिमेव चेति छ०।
(७) इयोरिति ग०। श्लोकार्द्धमेतत् ख० छ० चिह्नितपुस्तकयोर्नोपलभ्यते।
(८) तुविजातभगार्यमामिति ख०।
(९) इमाप्युक्तमिति ख०। इमाः इत्यत्र इदमिति पाठो विशुद्धः।
(१०) वरुणमिति ग०।

---

(क) ऋ० १, १३१, ७।

(१)घृतव्रता वैश्वदेवस्ततैन्द्रं परन्तु यत्(२)।
अच्छि क्रतुमिति त्वस्यामिन्द्रासोमौ सह स्तुतौ ॥८०॥
सरस्वति त्वमित्यस्मिन्नर्द्धर्चे मध्यमा तु वाक्(३)।
बृहस्पतिन्तु यो नस्तु(४) उत्तमा मरुतस्तुतिः(५) ॥८१॥
अस्माकं वैश्वदेवन्तु सूक्तादावुत्तमस्य तु(६)।
द्यावापृथिव्योर्द्वे त्वाद्यौ(७) तथैवैन्द्रौ(८) परे ततः ॥८२॥
द्वे द्वे राकासिनीवाल्योः षड्लैङ्ग्योऽप्यास्तथान्तया(९)।
(१०)रौद्रं मारुतन्तु परं(११)मा ते धारावरा इति ॥८३॥

(१) वावशीयो न इत्याद्या दुःस्वप्नाद्यप्रयाभिभोः। श्लोकार्द्धमेतत् ग० चिह्नितपुस्तके घृतव्रतेति श्लोकात् पूर्वमधिकं पठितं।
(२) परं यत इति ख०, परं तत इति ङ०।
(३) माध्यमानुवाग्मिति ख०।
(४) बृहस्पते स्तुतिर्या मा इति ख०, यो न स्त इति ग०।
(५) बृहस्पते स्तुतिर्या उ त्वन्मरुत्वती स्तुतिः इति ङ०।
(६) अस्माकं वैश्वदेवं स्यात् सूक्तादावस्य चास्य ऋगिति ग०, स्यादस्या ऋक् चान्तिमास्य त्विति ङ० पुस्तकान्तरञ्च।
(७) ऋगु द्यावापृथिवीयर्चेति क० घ० च०, द्यावापृथिव्योस्त्वाद्यौ द्वे इति ख०। द्वै इत्यत्र वा इति ग०।
(८) वाच चैन्द्रा इति ग०, चैन्द्रौ वर्वौ इति ङ० पुस्तकान्तरञ्च।
(९) तथान्त्ययेति ग०, षड्भुग्वाचान्तया स्तुवाः इति क० घ० च०।
(१०) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च रौद्रमित्यस्मात् पूर्वं, तत्पूर्वे द्वे ऋचौ कुह्वाः कुह्वमहमिति सूक्ते। तदुत्तरे द्वे अनुमतेरन्नो न्विति ते सूक्ते। धातुस्तत्सत्यचादौ धाता ददातु नो रयिम्(क)। इत्यधिकं पठितं।
(११) रौद्रं स्यात् परमारुतमिति पुस्तकान्तरम्।

(क) ऋ० ८, २, ३।

वामदेवो मृगान् दृष्ट्वा विभ्यत्तेभ्य ऋषिः स्वयम्[१]।
[२]अपाक्षपादुपेत्यत्र स्तुतः सूक्ते ततः[३] परे ॥८४॥
तुभ्यमित्यार्भवे[४] सूक्ते सावित्राद्गाश्विनमपरम्[५]।
सोमः पूषादितिश्चैव सोमापूष्णेन्द्रया स्तुताः ॥८५॥
वायव्ये[६] चैन्द्रवायव्या अन्यास्तु प्रउगा[क]स्तृचाः[७]।
प्रेत्यृक् स्तौति हविर्धाने अग्निस्तत्र निपातभाक् ॥८६॥
द्यावापृथिव्यौ द्यावेति हविर्धाने ततः परे।
[८]स्तुतिन्तु[९] पुनरेवेन्द्रमिन्द्रो भूत्वा कपिञ्जलः ॥८७॥

---

(१) वामदेवस्तु मृगान् लोत्यध्वनि निप्रस्थितांस्तु दि। इति क० ख० च०, मृगं दृष्ट्वेति ग०।
(२) ग० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च अपाक्षपादित्यस्मात् पूर्वं कुचि भुतमिति तस्या कक्ष्मलौत्सवादयमित्यधिकं पठितं।
(३) स्तव इति पुस्तकान्तरम्।
(४) इत्यार्तवे इति ख० ङ० पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् ग० चिह्नित पुस्तके नोपलभ्यते।
(६) वायव्यै इति ग०।
(७) वायव्ये चैन्द्रवायवौ प्रथाय प्रउगास्तृचा इति क० ग० घ० च०।
(८) ख० चिह्नितपुस्तके पुस्तकान्तरे च स्तुतिमिति श्लोकार्द्धात् प्राक्, वायव्येयो न इत्येषा दुःखप्रायप्रजामिनोति श्लोकार्द्धमधिकं दृश्यते।
(९) स्तुतन्त्विति ख०।

---

(क) ऋ० १०, १९०, १।

स्वपेर्जिगमिषोराशां ववाशा(क) स्याद(१) दूरियन् ।
स तमार्षेण सम्प्रेक्ष्य चक्षुषा परिचक्षिषन् ।
पराभ्यामभितुष्टाव सूक्ताभ्यान्तु कपिञ्जलम्(२) ॥८८॥

प्रगाथस्य गायंस्तपसाऽभ्यमन्त्र्य(१)—
द्रुह्मर्षिर्तामेकमतश्च पुत्रान् ।
स गाधिपुत्रस्तु जगाद सूक्तं
सोमस्य मेत्याग्नेयं यत्परञ्च(३) ॥८९॥

वैश्वानरीयेति(४) परिस्थितानि
प्रोद्वे आग्नेये(५) उत्तरे तत्र(६) दृष्टे ।
द्यावापृथिव्यौ तु नियच्छता(७)
वायोऽय देवाः पितरश्च मित्र(८) ॥९०॥
आग्नेयेषु दृश्यन्ते सूक्तेषु(९)—

---

(१) ववासे प्रतीति ख॰ ग॰ पुस्तकान्तरञ्च
(२) कथ्यगच्छन्निति ग॰ पुस्तकान्तरञ्च ।
(३) नेत्यग्रये वत्परे चेति ख॰ ग॰ पुस्तकान्तरञ्च ।
(४) वैश्वानरीयेऽप्येति ख॰ ग॰ पुस्तकान्तरञ्च ।
(५) प्रियो दे चेति ख॰ ग॰ पुस्तकान्तरञ्च ।
(६) तस्येति ख॰ ग॰ पुस्तकान्तरञ्च । उभरेश्चेति ग॰ ।
(७) द्यावा पृथिव्या उभशो नियावा इति ख॰ ग॰ घ॰ पुस्तकान्तरञ्च ।
(८) आपोऽप देवा पितरोऽप मित्र इति ख॰ ग॰ घ॰ पुस्तकान्तरञ्च ।
(९) क॰ ख॰ घ॰ चिह्नितपुस्तकेषु सूक्तान्तु दृश्यन्त तु इति पाठो न दृश्यते ।

---

(क) ऋ॰ ३, ९, २ । (ख) ऋ॰ ३, ११६, ३ ।

वैश्वानरो वरुणो जातवेदाः।
सूक्तैरेका यत्र यत्रास्तुतिर्वा(१)
नैपात्यांस्तां(२)श्चोपमार्थांश्च(३) विद्यात् ॥९१॥
राजर्षयो गृत्समदो वसिष्ठो
भरद्वाजः कुशिको गौतमाश्च।
विश्वेऽश्विनावङ्गिरसोऽथ योऽदिति-
र्भोजाः कण्वो(४) भृगवो रोदसी दिशः ॥९२॥
सावित्रसौम्याश्विन(५)मारुतेषु
ऐन्द्राग्नेये रौद्रसौर्य्यौषसेषु(६)।
आद्यावन्ते सूक्तमध्ये स्तुतास्तु(७)
न व्याप्नन्ति देवताः सूक्तभाजः(८) ॥९३॥
अग्नेः सप्तदशोऽध्याय ऊर्द्ध्व जघुष जनये(क)।

---

(१) एको यत्र तथान्यस्तुतिर्वेति ख० ङ० पुस्तकान्तरञ्च।
(२) निपातकर्षां० इति क० ग० घ० च०।
(३) उपमार्थांश्चेति पाठ० साधुः।
(४) कण्वा इति [illegible]० ङ० पुस्तकान्तरञ्च।
(५) सौर्य्याश्विनेति ख० ङ० पुस्तकान्तरञ्च।
(६) सौम्यौषसेष्विति ख० ङ० पुस्तकान्तरञ्च, सौर्य्यसेष्विति च०।
(७) स्तुतास्ता० इति ङ० पुस्तकान्तरञ्च।
(८) अन्ते देवता सूक्तभागिनीमिति पुस्तकान्तरम्, सूक्तभाजा इति ग०, सूक्तभागिनामिति ङ०।

---

(क) ऋ० १, ४, १।

एते काण्व्यावृचौ यौग्यौ ह्यश्नन्ति लेति पश्च च[१] ॥९४॥
ग्रेपा वङ्गभ्यो यूपेभ्यो[२] वैश्वदेवी नृगष्टमी[३]।
अंस्या[क]न्या ग्रथिनी योक्त्रा[४] पष्ठमैन्द्राग्न[५]मुच्यते ॥९५॥
वैश्वदेव्यग्निमुपसं[६] दधिकावृणेति[७] चेतया।
आग्नेन्द्री लम इन्द्रेति परा[८] वैश्वानरस्तृचः ॥९६॥
प्रयन्तु मारुता[९]श्चान्या शतधारन्नुस्तवः।
प्र वो वाजा ऋतूं[१०] स्तौति ऋत्विजः स्तौति[११]मन्यतः॥९७॥
पुरीष्यास[१२] [ख]इति लक्षान्धिष्ण्यानग्नीन् प्रशंसति।

---

(१) एते काण्वावृचौ चोभौ यौग्यौ ह्यश्नन्ति पश्च चेति ख०।
(२) ग्रेयेभ्यो वङ्गयूपेभ्य इति ग०।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेवीत्यृगष्टमीति पुस्तकान्तरम्।
(४) स्यान्ता प्रग्रथना योक्त्रेति घ०।
(५) स्यान्ताः प्रग्रथनाः योक्त्रेन्द्राग्नी ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च।
(६) अग्निमुपसं वैश्वदेवीति क० ख० ग० घ० च०।
(७) दधिक्राग्निमितीति क० ग० घ० च०।
(८) अग्नीन्द्री लम इन्द्रयन् परेति ङ० पुस्तकान्तरञ्च।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च।
(१०) ऋतूनितिपाठः समीचीनः।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च।
(१२) पुरीष्यास इति ग०।

---

(क) ऋ० १, १२१, ७। (ख) ऋ० ३, २२, ४।

ज्ञेया[१]श्चैव तु होतारस्ते दैव्याश्चैव तत्र तु[२] ॥९८॥
त्रयोविंशतिरैन्द्राग्नी इच्छन्तीति पराक्षतः।
सूक्ते प्रेति तु नद्यश्च विश्वामित्रं समूदिरे[३] ॥९९॥
[४] पुरोहितः सन्निज्यार्थं सुदासः सोऽहरद्धनम्।
विपाट्छुतुद्र्योः सम्भेदं प्रमित्येते उवाच ह ॥१००॥
प्रश्नादासच दृश्यन्ते द्विवद्बहुवदेकवत्।
अच्छेत्यर्द्धर्चं पच्छो वा नदीष्वप्येकवन्ति ते ॥१०१॥
आद्ये द्वृचे द्विवत्सार्द्धे विश्वामित्रवचःश्रुतेः।
एताभिर्ऋग्भिर्वा नद्य ऋषिं बहुवदूचिरे ॥१०२॥
षष्ठ्यष्टम्यो[५]श्चतुर्थ्याश्च दशम्याश्चेतरा ऋषेः।
सप्तम्यामृचि षष्ठ्याश्च यौ देवौ[६] परिकीर्त्तितौ ॥१०३॥
निपातिनौ तु तौ ज्ञेयौ नैन्द्रापार्वत्युगुत्तमे[७]।
करोति पुत्रिकां नारी[८] यथा दुहितरन्तथा ॥१०४॥

---

(१) यूपा इति ख०।
(२) तत्र चेति ख० ङ०।
(३) विश्वामित्रः समूहिरे इति ख० ग० पुस्तकान्तरञ्च, स संवदन्निति क० ष० च०।
(४) पुरोहित इत्यादि श्लोकत्रय क० ष० ङ० चिह्नितपुस्तकेषु नोपलभ्यते।
(५) षष्ठ्यष्टम्योरिति पाठः साधुः।
(६) यौदकौ इति ग०।
(७) पार्वत्यगूत्तमेति ङ० पुस्तकान्तरञ्च।
(८) नामेति ख० ङ० पुस्तकान्तरञ्च।

तस्यां सिञ्चति रेतो वा(१) तच्छासदिति कीर्तितम् ।
रिक्थस्य दुहितुर्दानं नेत्यृचि प्रतिषिध्यते(२) ॥१०५॥
तस्याश्चैव(३) यवीयांसं भ्रातरं ज्येष्ठवत्सुतं ।
सुदासश्च महायज्ञे दक्षिणा गाधिसूनवे(४) ॥१०६॥
निगृहीतं बलाच्चेतः(५) सोऽवसीदद्विचेतनः ।
तस्मै (६)ब्राह्मीन्तु सौरीं वा नाम्ना वाचं ससर्परीं ॥१०७॥
सूर्य्यवेश्मादिहागत्य ददुस्ते(७) जमदग्नयः ।
कुशिकानां ततः सा वागमतिन्तामपाहनत् ॥१०८॥
उपेत्य वाच्यां(८) कुशिकान् विश्वामित्रो बुबोध यत् ।
लब्ध्वा वाचं च हृष्टात्मा(९) तानृषीन् प्रत्यपूजयत्(१०) ॥१०९॥
ससर्परीरिति द्वाभ्यामृग्भ्यां वाच स्तुवन् स्वयम् ।
स्थिरावित्यनसो(क)ऽङ्गान्यनडुह(११)श्च प्रशंसन् व्रजन् ॥११०॥

---

(१) रेतो धा इति ङ० पुस्तकान्तरञ्च ।
(२) प्रतिषेधतीति ख० ङ० पुस्तकान्तरञ्च ।
(३) तस्याश्चाहेति ख० ङ० पुस्तकान्तरञ्च ।
(४) शक्तिना गाधिसूनवे इति क० ग० घ० च० ।
(५) गृहीत्वा बलाच्चेत इति ख० ङ० पुस्तकान्तरञ्च ।
(६) तस्येति क० घ० ।
(७) तां ददुरिति ख० ङ० पुस्तकान्तरञ्च । आगत्येत्यत्र आहृत्येति क० ग० घ० च० ।
(८) उपेति वाच्या कुशिकानिति क० घ०, उपेत्य वाचं कुशिकानिति ङ० ।
(९) प्रतिष्ठात्मेति ख० ङ० पुस्तकान्तरञ्च ।
(१०) अन्वचेतयदिति ङ० पुस्तकान्तरञ्च ।
(११) इत्यनसाङ्गान्यनडुहमिति क० घ० । अनडुहमित्यत्र अनडुहः इति घ० ।

---

(क) ऋ० ४, १०, १० ।

(१)अनसोऽङ्गानि चोत्थाप्य अनड्वाहौ सुदासजौ।
ततश्च स्वशरीरस्य सुदान् स स्वयमाप ह ॥१११॥
रथश्च स्वशरीरेण सुदान् गच्छन् पराददे।
परायत्तस्ततो यास्तत्र वसिष्ठद्वेषिणीर्विदुः(२) ॥११२॥
विश्वामित्रेण याः(३) प्रोक्ता अभिशापा इति स्मृताः।
द्विषद्द्वेषास्तु ताः प्रोक्ता विद्याद्वैवाभिचारिकाः(४) ॥११३॥
वसिष्ठास्ता(५)न शृण्वन्ति तदाचार्य्यकसम्मतम्।
कीर्त्तनाच्छ्रवणाद्वापि महान् दोषः प्रजायते(६) ॥११४॥
शतधा भिद्यते मूर्द्धा कीर्त्तितेन श्रुतेन वा।
तेषां बालाः प्रमीयन्ते तस्मात्तास्तु न कीर्त्तयेत् ॥११५॥
विश्वांश्च देवां(७)स्तुष्टाव चतुर्भिरिममित्यृषिः।
चस्तौदित्यात्मना सर्व्वान् मन्यमानः परं पदम् ॥११६॥

---

(१) अनस इत्यादिश्लोकार्द्धयोः क० ग० घ० चिह्नितपुस्तकेषु नेष्यते। तेषु अस्मिन् स्थले, अनसश्च स्वां शरीरस्य सुदासाच्छ्रु पराददे इति पाठोऽस्ति।

(२) वसिष्ठद्वेषिण्यः स्मृताः इति क० ख० ग० घ०।

(३) त्विति क० ख० ग० घ० च०।

(४) विद्वेषिण्यः स्मृता विद्यादभिचारेषु प्रयुज्यते। इति क० ग० घ० च०।

(५) त्विति ख० पुस्तकान्तरस्य, ते इति ङ०।

(६) श्लोकार्द्धमेतत् क० घ० चिह्नितपुस्तकयोर्न दृश्यते।

(७) विश्वान् देवांश्चेति ङ० पुस्तकान्तरस्य।

(१)देवानामसुरत्वं तदेकं मह्यदितीरयन् ।
अश्विनौ मित्र ऋभवो(२) धेनुर्मित्र इहेह वः ॥११७॥
(३)वैश्वदेवीति विज्ञेया मैत्री मित्राय पञ्च तु ।
ऐन्द्रार्भवस्तृचस्त्वार्भवे सूक्तः स उत्तमः(४) ॥११८॥
(५)पूर्व्वं द्वृचे निपातीन्द्र उपो वाजेन पञ्चमात् ।
उपस्थादुत्तरे षड्भिः स्तुता ऋग्देवता द्वृचैः(६) ॥११९॥
ऐन्द्रावरुणः प्रथमो बार्हस्पत्यस्ततः परः(७) ।
पौष्णसावित्रसौम्याश्च मैत्रावरुण उत्तमः(८) ॥१२०॥
तुष्टाव जमदग्निश्च(९) तेन देवा स्तुता द्वृचैः ।
देवर्षिपितृपूजार्थं य अन्नाद्यपचच्छुनः(१०) ॥१२१॥

---

(१) पक्तौ दिन्वात्मना सर्व्वानित्यादि मह्यदितीरयन्नित्यन्तपाठः क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नोपलभ्यते ।

(२) ऋतवः इति क॰ घ॰ च॰ ।

(३) वैश्वदेवीति श्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न विद्यते ।

(४) उत्तमे इति ख॰ ङ॰ पुस्तकान्तरस्थ ।

(५) पूर्व्वं द्वृचे इति श्लोकार्द्धं क॰ ख॰ घ॰ चिह्नितपुस्तकेषु नेष्यते ।

(६) पौषसादुत्तराभ्यस्त्वे षट् पृथग्देवतास्तृचाः इति क॰ ख॰ ग॰ घ॰ च॰ ।

(७) तथापरः इति ग॰ । तदुत्तरः इति ङ॰ ।

(८) मस्तामन्त्यस्तु यत्तृचः इति ङ॰ पुस्तकान्तरस्थ ।

(९) जमदग्निस्तु इति ख॰ ङ॰ पुस्तकान्तरस्थ ।

(१०) पपाथाभ्याश्चियच्छुन इति क॰ ग॰ घ॰ च॰ ।

यस्य वै श्येनरूपेण अहर[1]द्वृत्रहा मधु।
सोऽग्निन्तु पञ्चदशभिरिन्द्रं षोडशभिः परैः ॥१२२॥
अपिबस्त्वामिति तुष्टाव सूक्तैरेतैस्तु[2] गौतमः।
स भ्रातरमिति त्वास्तु[3] तिसृष्वग्निर्निपातभाक् ॥१२३॥
वरुणेनाभिस्तौति चाद्य[4]रन्वे निपातितम्।
लिङ्गोक्तदेवते सूक्ते एके[5] प्रत्यग्निरेव तु[6] ॥१२४॥
ऋषिर्बोधदिति द्वाभ्यां स्तौति सोमकमेव तु[7]।
तस्यैव चायुरर्थाय[8] पराभ्यामश्विनौ स्तुतौ ॥१२५॥
अत्रसानुजनिष्येऽहं[9] ब्रुवाण गर्भ एव[10] तम्[11]।
अन्वगात्त्वदिति.[12] पुत्रमिन्द्रमात्मदितेर्विषौ ॥१२६॥

---

(१) यस्य च श्येनरूपेण चाहरदिति ख० ङ० पुस्तकान्तरञ्च।
(२) हृति स्विति ग० घ०, हृति चेति ङ० पुस्तकान्तरञ्च।
(३) त्वास्त्विति ङ०।
(४) अभिष्टौत्या प्राङ्गैरिति क० ग० घ० च०।
(५) लिङ्गोक्तदैवत सूक्तमेवे इति क० घ०।
(६) लिङ्गोक्तैर्देवते सूक्ते एके प्रत्यग्निरिकुभे, इति ङ०।
(७) सोमकभूपतिमिति ङ० पुस्तकान्तरञ्च।
(८) चायुषोऽर्थायेति ख० ङ० पुस्तकान्तरञ्च।
(९) जनिष्यामेति क० ख० घ०, जनिष्याय इति ग०।
(१०) गर्भमेवेति क० ग० घ० च०।
(११) त्विति क० ख० ग० घ० च०।
(१२) अन्वगाददितिरिति ङ० पुस्तकान्तरञ्च।

स जातमात्रो युद्धाय ऋषिमेवाजुहाव तं[१]।
योधयन्[२]वामदेवस्तं क्षत्रात्मनि बलं तथा ॥१२७॥
दिनानि दश रात्रीश्च[३] विजिग्ये चैनमोजसा।
स तद्ध दश[४]मित्यस्यां विक्रीणन्नृषिरंसदि ॥१२८॥
स्वयमेवाभितुष्टाव[५] नकि[क]रिन्द्रेति[६] गौतमः।
किमादुतासीति चास्यां[७] मन्युं मध्ये[८] पराणुदत् ॥१२९॥
अथास्य रूपवीर्याणि धैर्यकार्याणि तान्यृषिः[९]।
विविधानि च कर्माणि प्रशंसादितये तथा ॥१३०॥

---

(१) स जातमात्रं युद्धायेति क० ख० ग० घ० च०।
(२) योधयेदिति क० ख० घ० च०।
(३) रात्र्येति क० ग० घ० च०।
(४) सतद्ध दशमिति ग०।
(५) स्वयं तेनाभितुष्टावेति ग०, स्वयमेवाभितुष्टावेति ङ० पुस्तकान्तरञ्च।
(६) इन्द्रेयेति ङ०।
(७) किमादुतासीदित्यस्यामिति ङ० पुस्तकान्तरञ्च।
(८) मन्युमर्धे इति क० ग० घ० च०, मन्युमध्ये इति ख०।
(९) धैर्याण्यार्याणि चारिष्विति क०, धैर्याण्यार्याणि चारिष्विति घ० च०, तान्दर्षिरिति ङ०।

---

(क) ऋ० १, २७, ८।

## अथ पञ्चमोऽध्यायः ।



प्रेति पञ्चार्भवं चौणि[१] दधिक्राणि पराण्यतः ।
द्युगद्यावापृथिव्यौ स्तौति दधिक्राव्णा[क]मुखे तु या[२] ॥१॥
परोचेरस्तुतो वाग्भिर्नामभिस्तु स्तुतास्त्रयः ।
अग्निर्वायुश्च सूर्यश्च हंसः शुचिषदित्यृचा[३] ॥२॥
नियुक्ता सूर्यदेवत्या हंस इत्यैतरेयके[४] ।
द्वे त्वैन्द्रावरुणे सूक्ते[५] नव[६] चौष्णाश्विनाग्निकः[७] ।
अयं वायो विद्दी[ग] त्वेषु [८]वायव्याः सप्त कीर्त्तिताः ॥३॥

(१) पञ्चार्भवाक्षीति ङ॰ ।
(२) दधिक्राव्णा स्तुतौ हि वामिति ख॰, दधिक्राया मुखे तु येति ग॰, दधिक्रायामुतो (ख) हि वामिति ङ॰ ।
(३) इत्यृचीति क॰ ग॰ घ॰ च॰ ।
(४) श्लोकार्द्धमेतत् क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।
(५) द्वे इन्द्रावरुणे इन्द्रादिति ङ॰ ।
(६) नत॰ इति ग॰ ङ॰ पुस्तकान्तरश्च ।
(७) चाश्विनाग्निक॰ इति क॰ ख॰ ग॰ घ॰ च॰ ।
(८) विद्दो मा त्वा इति ङ॰ पुस्तकान्तरश्च ।

(क) ऋ॰ ४, ३६, २ । (ख) ऋ॰ १, २३, १५ ।
(ग) ऋ॰ ४, ४८, १ ।

नव चैवेन्द्रवायव्या ऐन्द्रा[1]स्तिस्रः शतेन षट्[2]।
इदं कश्चित्तदेवत्यं यस्तु स्तम्भोत्तमो द्वृचः[3] ॥४॥
स्तुतिरिन्द्राबृहस्पत्योरष्टावेता ऋचः स्मृताः।
बार्हस्पत्यन्तु तत्सूक्तमिदमित्यौषसे परे।
पुरो धातुः कर्मप्रशा स इन्द्राजोच्यते[4] द्वचे[5] ॥५॥
तत्साविची द्वे तु को वैश्वदेव[6]
मही द्यावा पृथिवीयं तत्परश्च[7]।
चेत्रस्येति तिस्रः क्षेत्रपत्याः[8]
शुनं[क] वाहाः शुनदेवी तृगुत्तमा[9] ॥६॥

(१) इन्द्र इति क० ग० घ० च०।

(२) शतेन षडिति ङ०।

(३) इदमित्यौषसे परे इति क० घ० च०, यस्तं स्तम्भोतिमो द्वच इति ग०।

(४) स इन्द्राजोच्यते इति पुस्तकान्तरम्।

(५) स्तुतिरिन्द्राबृहस्पत्योरिति श्लोक क० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(६) तत्साविचेको वैश्वदेवमिति ङ०।

(७) परन्तु यदिति क० ग० घ० च०।

(८) चेत्रस्य चेत्रपत्यमुक्तचस्त्विति क० घ०, चेत्रस्येति चेत्रपत्यस्तृचस्त्विति ग०।

(९) शुनदेवयमुत्तरेति ख० ङ० पुस्तकान्तरश्च।

(क) ऋ० ४, ४५७, ५८।

वायुः शुनः सूर्य एवात्र(१) सीरः(२)
शुनासीरौ(क) वायुसूर्य्यौ(३) वदन्ति।
शुनासीरं यास्क इन्द्रन्तु मेने
सूर्य्येन्द्रौ तौ मन्यते शाकपूणिः ॥७॥
शुनासीरौ पञ्चम्यां तु स्तुतौ तौ
सीतायै षष्ठी त्वथ सप्तमी च(४)।
शुनं नः फालाः(ख) कृषि स्तौति पादः(५)
शुनं कीनाशाः(ग) कृषिजीवान् मनुष्यान्(६) ॥८॥
शुनं पादे पर्जन्य तृतीये(७)
चौनृषिः कृषिकामो(८)ऽजगाद।

---

(१) एवात्रेत्यत्र सैवेति ख० ङ० पुस्तकान्तरञ्च।
(२) सौर्य्यं इति क० घ० च०।
(३) वायुसूर्य्यमिति क० घ० च०।
(४) द्वे तु सीतायै षष्ठी सप्तमी चेति क० ग० घ० च०।
(५) पादे इति ङ०।
(६) कृषिजीमनुष्यानिति क० घ० च०।
(७) शुनं पादेऽथ पर्ज्जन्यस्तृतीये इति क० ग० घ० च०।
(८) अन्त्यान् त्वृषिर्धर्म्मकाम इति क० घ० च०, अन्त्यस्तृषिर्धनकाम इति ग०।

---

(क) ऋ० ४, ५७, ५। (ख) ऋ० ४, ५७, ८। (ग) ऋ० ४ ५७, ८।

ऋषिं वा[1] स्तौति सर्वं हि सूक्त

समुद्रादित्ययोर्मध्यमस्य ॥९॥

आदित्यं वा ब्राह्मणोक्तं प्रदिष्टं

ह्याग्नेय[2] यदाज्यसूक्तं[3] हि दृष्टं[4] ।

अपां स्तुतिं वा यदि वा घृतस्तुतिं

गवां स्तुतिं वा सूक्त[5]मेतद्वदन्ति ॥१०॥

स्वर्भानुदृष्टं सूर्यस्य अपघ्नत्य[6]तमोऽत्रयः ।

सप्तविंशतिभिः सूक्तैरबोधीत्यग्निमस्तुवन् ॥११॥

त्रैवृष्ण[क]त्र्यसदस्युश्च[ख] अश्वमेध इति त्रयः ।

स्तूयमानाः परीक्ष्याः स्युरचिष्वेते[7]कचित् क्वचित्[8] ॥१२॥

ऐक्ष्वाक[9] त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः ।

---

(१) ऋषिवदिति क० घ० च० ।

(२) आग्नेयमिति ख० ङ० पुस्तकान्तरयोः ।

(३) वाप्याज्यसूक्तमिति क० घ० च०, वा प्राज्यसूक्तमिति ग० ।

(४) प्रदिष्टमिति ख० ङ० पुस्तकान्तरयोः ।

(५) गव्यमेके सौर्यमिति क० ग० घ० च० ।

(६) स्वर्भानुदिष्टसूर्यस्यापघ्नन् ये इति ख० ङ० पुस्तकान्तरयोः ।

(७) अन्विष्वेते इति घ० ।

(८) त्रैवृष्णत्र्यसदस्युश्चेति श्लोकः ख० ङ० चिह्नितपुस्तकयोर्न विद्यते ।

(९) ऐक्ष्वाकुरिति क० ग० घ० च० ।

---

(क) ऋ० ५, २७, १ । (ख) ऋ० ४, ३८, १ ।

अविन्दत पिशाचीं च[1] जाया तस्य च भूपतेः ॥१८॥
निषसः स तया सार्द्धं मासं द्यां कशिपावपि[2] ।
तामुपामन्त्रयाञ्चक्रे कमेत त्वमिति नृपा[3] ॥१९॥
नरः[4] कुमाररूपेण नृपस्ता[5]मभ्यभाषत ।
विद्योतिषेति चोक्तायां सहसाग्निरदज्ज्वलत् ॥२०॥
[6]पिशाचीमदहत्तां स यत्र चोपविवेश सा ।
एष एव परामृष्टो भाल्लवी ब्राह्मणे[7] ध्रुवः ॥२१॥
निदानसंज्ञके ग्रन्थे छन्दोगानामिति श्रुतिः[8] ।
भवेदेव परामर्शः सूक्तस्यास्य व्यपेक्षया[9] ॥२२॥
भवन्ति वाक्या मन्त्रा[10] हि विविधर्द्धय[11] [illegible]

---

(१) तामिति ग॰ ङ॰ पुस्तकान्तरयोः।
(२) कपिशावपीति क॰ ग॰ च॰।
(३) युवेत्यृचेति ङ॰।
(४) नर इति क॰ ग॰ च॰।
(५) ब्रुवंस्तामिति ख॰।
(६) ख॰ ङ॰ चिह्नितपुस्तकयो [illegible] इति श्लोकात् प्राक् [illegible] अ-
धिकं श्लोकार्द्धं पठितम्।
(७) भाल्लाभिब्राह्मण इति ख॰, [illegible]
(८) एतच्छ्लोकार्द्धं क॰ ग॰ ङ॰ च॰ [illegible]
(९) विवक्षयेति ख॰ ग॰ पुस्तकयोः।
(१०) वाक्यान्येवामिति क॰ ग॰ ङ॰ च॰।
(११) विविधर्द्धयेति क॰ ग॰ ङ॰ च॰।

दृश्यन्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥
जामदग्न्यो यथाप्रिय.(१) स्तौतीया(२)चैतरेयके ।
आप्रियः सुसमिद्धाय(३) पञ्चमं सूक्तमत्र तु(४) ॥२४॥
एतद्(५)वैश्वदेवी वा अन्त्या चैन्द्राग्न्युपोत्तमे ।
ऐन्द्राणि द्वादश श्रीणीत्युशना(६)यत्र(७) संस्तुतः ॥२५॥
उग्रनेति तु पादेन सहयदामनेन च(८) ।
इन्द्राकुत्सेति चैतस्या कुत्सेनेन्द्रः स्तुतः सह ॥२६॥
यत्त्वा सूर्य्येति चाचीर्णा पञ्चर्चं(९) कर्म कीर्त्यते ।
(१०)वैष्ण्यास्त्र्यरुणो राजा अश्वमेध स्तवं च यः ॥२७॥
स्तूयमानाः प्रतीच्याः स्युरविश्वेते क्वचित् क्वचित् ।
अनस्वन्तेति सूक्तेऽस्मिन्नाग्नेयेऽचिर्ऋषिः स्वयम् ॥२८॥
दानतुष्टः प्रशमैतावाजर्षीनिति केचन ।

---

(१) जामदग्न्यस्तथैवाप्य इति क० घ० च०, यथाप्रीय इति ग० ।
(२) स्तौतीया इति ख० ग० ङ० पुस्तकान्तरच ।
(३) आप्य सुसमिद्धायेति क० ग० घ० च० ।
(४) चर्चिस्त्विति ख० ङ० पुस्तकान्तरच ।
(५) एदग्नमिति क० ग० घ० च०, रौदग्नमिति ख० ।
(६) द्वादशाग्न्यादीन्युशना इति ङ० पुस्तकान्तरच ।
(७) त्वत्रेति क० ख० ग० घ० च० ।
(८) उग्रनेति च पादोऽर्धं संश्चयदा परस्य य इति ख०, परस्य य इयम परस्त्रय इति ङ० पुस्तकान्तरच ।
(९) पञ्चर्च इति क० घ० च० ।
(१०) वैष्ण्यस्त्र्यरुणो राजेत्यादि सार्द्धश्लोकः क० ग० घ० च० चिह्नित पुस्तकेषु न विद्यते ।

आगौरध्येषणाच्चैभ्यो अग्निं प्रति च दृश्यते ॥२९॥
अयुतञ्च गवां त्रीणि शतान्यथ च विंशतिः ।
सौवर्णशकटं गोभ्यां त्र्यरुणोऽदान्नृपोऽन्वये ॥३०॥
अश्वमेधशतं चोढ्वांस्त्रसदस्युर्धनं बहु ।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥३१॥
आत्मा चितात्मने[१] दद्यादयद्दीन्नृपतेर्ऋषिः ।
अत्रेः सुतस्त्वृषिं बभ्रुमार्त्विज्याय वृणश्च यः ॥३२॥
सहस्रदक्षिणे सोमे वव्रे तं सोऽप्ययाजयत् ।
ददौ तदौशनो राजा सहस्राणि शतानि च ॥३३॥
तस्मै चत्वारि चत्वारि महावीरञ्च काञ्चनम् ।
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ॥३४॥
प्रतिष्ठञ्च ऋषिर्गच्छन् मध्यमेनाग्निना पथि ।
पृष्ट इन्द्रेण चाचख्यौ भद्रं चतसृभिश्च तत् ॥३५॥
कोऽनुवान् वैश्वदेवानि एकादश[२] पराश्चतः[३] ।
मारुतानि दश प्रेति इलाभीत्यृषि तु सुता[४] ॥३६॥
द्वितीययान्त्यया स्तुतः सविता शौनकोऽब्रवीत्[५] ।
उपेति वार्हस्पत्यस्तृचो यो मारुत्यृगुत्तरा ॥३७॥

(१) आत्मश्चितात्मने इति पाठः सङ्गतः ।
(२) कोऽनुवाश्च वैश्वदेवान्येकादशेति क० ।
(३) त्विति ङ० पुस्तकान्तरञ्च ।
(४) प्रेतीळाभीत्यृषि तु संस्तुतेति ग॰ तति ख० ङ० पुस्तकान्तरञ्च ।
(५) श्लोकार्द्धमेतत् क० ग० ख० घ० षु न दृश्यते ।

दृश्यन्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥
जामदग्न्यो यथाप्रिय.[1] स्तौतीया[2]श्चैतरेयके।
आप्रिय. सुसमिद्धाय[3] पञ्चमं सूक्तमत्र तु[4] ॥२४॥
एतद्[5]वैश्वदेवी वा अन्त्या चैन्द्राग्न्युपोत्तमे।
ऐन्द्राणि द्वादश चौणीत्युशना[6]यत्र[7] संस्तुतः ॥२५॥
उशनेति तु पादेन सहयदामनेन च[8]।
इन्द्राकुत्सेति चैतस्या कुत्सेनेन्द्रः स्तुत' सह ॥२६॥
यत्त्वा सूर्येति चाचौणा पञ्चर्चे[9] कर्म कीर्त्यते।
[10]वैदथ्यास्त्यरुणो राजा अश्वमेध क्षणं च यः॥२७॥
स्तूयमानाः प्रतीच्याः स्तुरचिन्वैते क्वचित् क्वचित्।
अमसन्नेति सूक्तेऽस्मिन्नाग्नेयेऽर्चिर्भिः स्वयम् ॥२८॥
दानतुष्टः श्यावैताबाजर्षीनिति केचन।

---

(१) जामदग्न्यस्तथैवाच्य इति क॰ ख॰ च॰, यथाप्रीय इति ग॰।
(२) स्तोकोद्या इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(३) आप्र सुसमिद्धायेति क॰ ग॰ घ॰ च॰।
(४) चर्चिर्व्विति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) एदमग्निति क॰ ग॰ घ॰ च॰, रोदमग्निति ख॰।
(६) द्वादशान्त्यादौन्युशना इति ङ॰ पुस्तकान्तरञ्च।
(७) त्वमेति क॰ ख॰ ग॰ घ॰ च॰।
(८) उशनेति च पादोऽयं सहयदा परस्य यः इति ख॰, परस्य य इत्यत्र परस्तय इति ङ॰ पुस्तकान्तरञ्च।
(९) पश्चर्च इति क॰ घ॰ च॰।
(१०) वैदथ्यस्त्यारुणो राजेत्यादि सार्द्धाष्टश्लोक क॰ ग॰ घ॰ च॰ चिह्नित पुस्तकेषु न विद्यते।

आग्नीरथ्येषणाच्चैभ्यो अग्निं प्रति च दृश्यते ॥१९॥
अयुतञ्च गवां चौपि शतान्यथ च विंशतिः ।
सौवर्णशकटं गोभ्यां अरुणोऽदान्नृपोऽचये ॥२०॥
अश्वमेधशत चोष्टांस्त्रसदस्युर्धनं बहु ।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥२१॥
आत्मा हितात्मने[1] दद्यादपदीनृपतेर्ऋषिः ।
अत्रेः सुतस्त्वपि बभ्रुमार्त्विज्याय स्वयञ्च यः ॥२२॥
सहस्रदक्षिणे सोमे वने तु सोऽप्ययाजयत् ।
ददौ तदौशनो राजा सहस्राणि शतानि च ॥२३॥
तस्मै चत्वारि चत्वारि महावीरस्य काञ्चनम् ।
सवर्गेषु महावीराः सौवर्णास्तस्य चाभवन् ॥२४॥
प्रतिगृह्य ऋषिर्गच्छन् मध्यमेनाग्निना पथि ।
दृष्ट इन्द्रेण चाचख्यौ भद्र चतसृभिश्च तत् ॥२५॥
कौतुवान् वैश्वदेवानि एकादश[2] पराश्वत.[3] ।
मारुतानि दश प्रेति इलाभीत्यृचि तु स्तुता[4] ॥२६॥
यान्यया सुतः सविता शौनकोऽब्रवीत्[5] ।
वार्हस्पत्यमृचो यो मारुत्युगुत्तरा ॥२७॥

राजर्षिरभवद्दार्भ्यो रथवीति(क)रिति श्रुतः(१)।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४८॥
आत्मानं कार्य्यमर्थं(२)च ख्यापयन् प्राञ्जलिः स्थितः।
अवृणीतर्षिमात्रेयमार्लिङ्ग्यायार्चनानसम्(ख) ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये।
श्यावाश्व(ग)श्चात्रिपुत्रस्य पुत्रः स्वर्च्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्व्ववेदान् यः पित्राध्यापितो सुदा।
अर्च्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्(३)।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत्।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः(३) ॥५३॥
संयुज्यस्व मया राजन्निति याज्यञ्च सोऽब्रवीत्।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते पुत्रीमहं कन्यां श्यावाश्वाय ददामि हि।
ऋषिपुत्रो दुर्बलो हि जामाता नावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा ह्यहम्।

(१) श्रुतिरिति ङ॰ पुस्तकान्तरस्थ।
(२) कार्य्यवन्तमिति ङ॰ पुस्तकान्तरस्थ।
(३) श्यावाश्वश्चात्रिपुत्रस्येति सार्द्धश्लोकः क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(४) एतदर्द्धश्लोकार्द्धं क॰ ग॰ घ॰ चिह्नितपुस्तकेषु न दृश्यते।

(क) ऋ॰ ५, ६१, १८। (ख) ऋ॰ ५, ६४, ७। (ग) ऋ॰ ५, ६१, ५।

नानृषिर्नो हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥

ऋषये दीयतां कन्या चेदृसौ वा भवेत्तथा।

ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः[१] ॥५७॥

प्रत्याचष्टे स[२] तं राजा सह सम्मन्त्र्य भार्यया।

अनृषिर्नो न[३] जामाता कश्चिद्भवितुमर्हति ॥५८॥

प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्त्तत।

श्यावाश्वस्य तु कन्यायां मनो नैव न्यवर्त्तत[४] ॥५९॥

ततः सुतौ[५] निवर्त्याशु तावेतावभिजग्मतुः[६]।

प्रथीयसौ[क][७] तरन्त[ख]ञ्च पुरुमीळ्ह[ग][८]ञ्च पार्थिवम्[९] ॥६०॥

तरन्तपुरुमीळ्हौ[१०] तु राजानौ वै ददर्शतुः ऋषी[११]।

ताभ्यान्तौ चक्रतुः पूजामृषिभ्यां नृपती[१२] स्वयम् ॥६१॥

---

(१) श्यावाश्वाय सुता दित्सुरित्यादिसार्द्धश्लोकत्रयं क० ग० घ० च०-चिह्नितपुस्तकेषु नेष्यते।

(२) प्रायो भर्त्त्रयेति ख० ङ० पुस्तकान्तरञ्च।

(३) नैवेति ग०।

(४) न स्म निवर्त्तते इति ख० ङ० पुस्तकान्तरञ्च।

(५) ततस्तौ त्विति क० ग० घ० च०।

(६) ततः सुतौ निवर्त्तेत उभावेवाभिजग्मतुरिति ख० ङ० पुस्तकान्तरञ्च।

(७) प्रसीयसीति ङ० पुस्तकान्तरञ्च।

(८) पुरुमीढमिति ङ०।

(९) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितं।

(१०) तरन्तपुरुमीढाविति ङ० पुस्तकान्तरञ्च।

(११) ददृशिमाविति क० घ० च०।

(१२) तु पतिरिति क० घ० च०।

---

(क) ऋ० ५, ६१, ६। (ख) ऋ० १, १०५, ११। (ग) ऋ० ८, ७१, १४।

राजर्षिरभवद्दार्भ्यो रथवीति[क]रिति श्रुतः[१] ।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४९॥
आत्मानं कार्य्यमर्थ[२]ञ्च ख्यापयन् प्राञ्जलिः स्थितः ।
अवृणीतर्षिमात्रेयमार्चिज्यायार्चनानसम्[ख] ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये ।
श्यावाश्व[ग]श्चार्चिपुत्रस्य पुत्रः स्वस्वर्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्व्ववेदान् यः पित्राध्यापितो मुदा ।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्[३] ।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् ।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः[४] ॥५३॥
संयुज्यस्व मया राजन्निति याज्यञ्च सोऽब्रवीत् ।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते पुत्रीमतं कन्यां श्यावाश्वाय ददामि हि ।
ऋषिपुत्रो दुर्बलो हि जामाता नावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा ह्यहम् ।

(१) श्रुतिरिति ङ० पुस्तकान्तरच ।
(२) कार्य्यवन्तमिति ङ० पुस्तकान्तरच ।
(३) श्यावाश्वश्चार्चिपुत्रस्येति सार्द्धश्लोकः क० ख० ग० चिह्नितपुस्तकेषु नोपलभ्यते ।
(४) एतच्छ्लोकार्द्धं क० ख० ग० चिह्नितपुस्तकेषु न दृश्यते ।

(क) ऋ० ५, ६१, १९ । (ख) ऋ० ५, ६४, ७ । (ग) ऋ० ५, ६१, ५ ।

नानृषिर्नो हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥
ऋषये दीयतां कन्या चेदृशो वा भवेत्तथा ।
ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः(१) ॥५७॥
प्रत्याचष्टे स(२) तं राजा सह सम्मन्त्र्य भार्य्यया ।
अनृषिर्नो न(३) जामाता कश्चिद्भवितुमर्हति ॥५८॥
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्त्तत ।
श्यावाश्वस्य तु कन्यायां मनो नैव न्यवर्त्तत(४) ॥५९॥
ततः स्तुतौ(५) निवर्त्यास्तु तावेतावभिजग्मतुः(६) ।
प्रसीयसो(क)(७) तरन्त(ख)श्च पुरुमीळ्ह(ग)(८)श्च पार्थिवम्(९) ॥६०॥
तरन्तपुरुमीळ्हौ(१०) तु राजानौ वै ददर्श्यृषी(११) ।
ताभ्यान्तौ चक्रतुः पूजामृषिभ्यां नृपतौ(१२) स्वयम् ॥६१॥

---

(१) श्यावाश्वाय सुतां दित्सुरित्यादिसार्द्धश्लोकत्रयं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(२) प्रावोचत्तथेति ख० ङ० पुस्तकान्तरञ्च।
(३) नैवेति ग०।
(४) न स्म निवर्त्तते इति ख० ङ० पुस्तकान्तरञ्च।
(५) ततस्तौ त्विति क० ग० घ० च०।
(६) ततः स्तुतौ निवर्त्तेत उभावेवाभिजग्मतुरिति ख० ङ० पुस्तकान्तरञ्च।
(७) प्रसीयसीति ङ० पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ङ०।
(९) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितं।
(१०) तरन्तपुरुमीढाविति ङ० पुस्तकान्तरञ्च।
(११) ददर्शिनाविति क० घ० च०।
(१२) तु पतिरिति क० घ० च०।

---

(क) ऋ० ५, ६१, ६। (ख) ऋ० १, १०५, ११। (ग) ऋ० ८, ७१, १४।

ऋषिपुत्रं महिष्याय दर्शयामास तं(१) नृपः ।
तरन्तानुमतेनैव(२) प्रादाद्बहुविधं वसु ॥६२॥
अजाविकं गवाश्वञ्च श्यावाश्वाय शशीयसी(३) ।
ऋषिं(४) याच्यार्चितौ गत्वा पितापुत्रौ स्वमाश्रमम् ॥६३॥
अभ्यवादयतामर्चिं(५) महर्षिं दीप्ततेजसम् ।
श्यावाश्वस्य मनस्यासीन्मन्त्रस्यादर्शनादहम् ॥६४॥
[illegible] लब्धवानिमां कन्यां हन्त सर्वाङ्गशोभनाम् ।
अप्यहं मन्त्रदर्शी स्यां भवेद्धर्षो महान् मम ॥६५॥
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः(६) ।
ददर्श संस्थितान् पार्श्वे तुल्यरूपान्महात्मनः(७) ॥६६॥
समानवयसश्चैव(८) मरुतो रुक्मवक्षसः ।
तांस्तुल्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ॥६७॥
श्यावाश्वो विस्मितोऽपृच्छत्केऽस्थेति(९) मरुतस्तदा ।

---

(१) वै इति ख० ङ० ।
(२) तरन्तानुमता चैवेति क० ग० ङ० च० ।
(३) प्रशीयसीति ङ० पुस्तकान्तरञ्च ।
(४) तौ त्विति पाठः सङ्गतः ।
(५) अभ्यवादयतां तमिति ङ० पुस्तकान्तरञ्च ।
(६) ऋषिं याच्यार्चितौ गत्वेत्यादि प्रादुरासीन्मरुद्गणः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते ।
(७) तुल्यरूपानिवात्मनः इति क० ख० ग० घ० च० ।
(८) चैवमिति ङ० पुस्तकान्तरञ्च ।
(९) के स्थेति पाठः समीचीनः । केस्थेति क०, कोस्थेति ङ० ।

ततस्तु मरुतो देवानृषिस्तानन्वबुध्यत[१] ॥६८॥
य ईं वहन्त इत्यृग्भिः षड्भि[२] स्तुष्टाव तांस्तथा।
अतिक्रमं हितमृषिर्मेने विपुलमात्मनः ॥६९॥
यत्र[३] दृष्ट्वैव तुष्टाव यच्च[४] केष्वेति[५] पृष्टवान्।
स्तुताः स्तुत्यानया प्रीता गच्छन्तः पृश्निमातरः[क] ॥७०॥
अवमुच्य स्ववक्षोभ्यो[६] रुक्मं तस्मै तदा ददुः।
मरुत्सु तु प्रयातेषु श्यावाश्वस्तु महायशाः[७] ॥७१॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा।
स सद्य ऋषिरात्मानं विवक्षू रथवीतये[८] ॥७२॥
एतं मे स्तोममित्यृग्भ्यां[९] दौत्ये[१०] रात्रीं न्ययोजयत्।
रथवीतिं तपस्यन्तं[११] सम्प्रेक्ष्यार्षेण चक्षुषा ॥७३॥

---

(१) यद्दस्तूनन्वबुध्यतेति क० ग० घ० च०।
(२) बुद्ध्वेति क० ग० घ० च०।
(३) यात्र इति क० घ० च०।
(४) याश्चेति क० ग० घ० च०।
(५) केष्टेतीति क०, केष्ठेतीति ख०।
(६) व्यमुच्यत स्वकण्ठेभ्यः इति ख०, व्यामुच्यते स्वकण्ठेभ्यः इति ङ०।
(७) महातपाः इति ख० ङ० पुस्तकान्तरञ्च।
(८) प्रवक्ष्यन्रथवीतये इति क० ग० घ० च०।
(९) इत्याभ्यामिति क० ग० घ० च०।
(१०) दूत्ये इति ख० पुस्तकान्तरञ्च।
(११) रथवीतिमपश्यन्तीमिति ख० ङ०।

(क) ऋ० १, २३, १०।

रम्ये हिमवतः पृष्ठ एषचैतीति चाब्रवीत्।
ऋषेर्नियोगमाज्ञाय देव्या राज्ञा प्रचोदितः।
आदाय कन्यां तां दार्भ्य उपेयायार्चनानसम् ॥७४॥
पादौ तस्योपसङ्गृह्य स्थितः[1] प्रह्वः कृताञ्जलिः।
रथवीतिरहं दार्भ्य इति नाम प्रशंस च ॥७५॥
मया यद्भूति[2] मिच्छन्तं त्वां प्रत्याचक्षि यत्पुरा।
तत् चमस्व नमस्तेऽस्तु मा च मे भगवन् क्रुधाः[3] ॥७६॥
ऋषेः पुत्रः स्वयमृषिः[4] पिताsसि भगवन्नृषेः।
हन्त प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत्[5] ॥७७॥
पाद्यार्घ्यमधुपर्कैश्च पूजयित्वाथ तं[6] नृपः।
शुक्लमश्वशतं दत्त्वा अनुजज्ञे गृहान् प्रति ॥७८॥
प्रमीयवीं[7] तरन्तञ्च पुरुमीळ्हं[8] च पार्थिवम्।
यद्भिः समदिति स्तुत्वा जगामर्षिरपि स्वयम्[9] ॥७९॥

---

(१) स्थित्वेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) संयोगमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) क्रुध॰ इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) चर्षिरिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) स्नुषान्तेऽस्त्विति चाब्रवीदिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) पार्थनाना स्वयमिति क॰ ग॰ घ॰।
(७) प्रवीयसीमिति ङ॰ पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ङ॰ पुस्तकान्तरञ्च।
(९) ग्रयमिति क॰ ग॰ घ॰ च॰।

स्रवतामपि गर्भाणां दृष्टं तदनुमन्त्रणम् ।
भावदृत्तं तु तत्तस्यास्तथारूपं हि दृश्यते ॥८५॥
जरायुर्गर्भगर्व्दाभ्यामेतद्रूपं हि दृश्यते[१] ।
मह्वे उपस्थे[२] सावित्रं युञ्जतेच्छावदः[३] स्मृतः ॥८६॥
पर्जन्यो वल्गिति त्वस्मिन्[४] पृथिवी मध्यमा तु[५]वाक्[६] ।
यथा नो देवसवितरियं दुःस्वप्ननाशिनी[७] ॥८७॥
वारुणन्तु प्रवद्वाजे षट्कमैन्द्राग्नमुत्तरम्[८] ।
विष्णुं न्यक्क[९]मरक्षेति मारुतं सूक्तमुत्तरम्[१०] ॥८८॥
एतया मरुदाख्यातं द्यौर्नेन्द्रे प्रतिपूर्व्वकम्[११] ।

---

(१) स्रवतामपि गर्भाणामित्यादिसार्द्धश्लोकः क॰ ग॰ घ॰ ङ॰ चिह्नित-पुस्तकेषु नोपलभ्यते ।
(२) मह्वीषस्थेतीति क॰ घ॰ ङ॰ ।
(३) सावित्रे युञ्जतेच्छेति वै इति क॰ ग॰ घ॰ ङ॰ ।
(४) पर्जन्यस्तु वल्गिथेतीति ख॰ पुस्तकान्तरञ्च ।
(५) त्विति ग॰ ।
(६) स्तुतेति ख॰ पुस्तकान्तरञ्च ।
(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ ङ॰ चिह्नितपुस्तकेषु न दृश्यते ।
(८) उत्तरमित्यत्र उत्तममिति क॰, इन्द्राग्नैन्द्राग्नमुच्यते इति ख॰, मिन्द्राग्नैन्द्राग्नमुच्यते इति ख॰ पुस्तकान्तरञ्च ।
(९) विष्णुं चिक्रमिति ख॰ पुस्तकान्तरञ्च ।
(१०) उत्तममिति ख॰ ।
(११) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ ङ॰ चिह्नितपुस्तकेषु नोपलभ्यते ।

श्रीसूक्तमाशीर्वादस्तु[१] स्त्रीपुत्राणां पराणि तु[२] ॥८९॥
तस्यादा[३]लक्ष्म्यपनुद[४] मग्निस्तत्र[५] निपातभाक् ।
प्रजावान् जीवपुत्रो[६] वा गर्भकर्मणि संस्तुतौ ॥९०॥
नानारूपाः पयस्विन्यः[७] संस्रवन्तीति संस्तुताः[८] ।
आशीर्वादेषु संज्ञासु कर्मसंज्ञास्तु देवताः[९] ॥९१॥
निपातभाग् लिङ्गवाक्यात्[१०] परीक्षेतेह मन्त्रवित् ।
मन्त्रप्रयोगमन्त्रयोः[११] प्रयोगो[१२] बलवत्तरः ॥९२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्त्वेति ङ० पुस्तकान्तरञ्च।
(२) स्त्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, स्त्रीः पुत्राणां पराश्च षट् इति ङ० पुस्तकान्तरञ्च।
(३) तस्यादेति क० घ० च०।
(४) लक्ष्म्यपनिर्णोदः इति क० घ० च०, स्याद्यालक्ष्मीं पवेर्नोदे इति ख०, अलक्ष्म्यपनिर्णोदे इति ङ० पुस्तकान्तरञ्च।
(५) स्तत्रेति ख० ङ०।
(६) प्रजावज्जीवपुत्रः इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ०।
(७) पयास्विन्यः इति ख० ग०।
(८) संस्तुताविति ङ०।
(९) कर्मसंज्ञा तु देवतेति ख०।
(१०) लिङ्गवाक्येति ख० ग०।
(११) मन्त्रप्रयोगमन्त्राणामिति ग०।
(१२) प्रयोगे इति ग०।

विधेस्तयोः परीक्षा(१) स्यान्मन्त्राः स्युरभिधायकाः(२) ।
तस्मात्तेन विसंवादो मन्त्राणां तद्गतानि तु ॥८३॥
गुणाभिधायकानि स्युः सविज्ञानपदानि तु ।
मन्त्रेषु गुणभूतेषु प्रधानेषु च कर्मसु ॥८४॥
प्रधानगुणभूताः स्युर्देवता इति गम्यते ।
त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ॥८५॥
आहरत्सहितः साध्यैर्विश्वैर्देवैः सहेति च ।
तत्र वाग्दीक्षणीयायामाजगाम शरीरिणी(३) ॥८६॥
तां दृष्ट्वा युगपत्तत्र कस्याप वरुणस्य च ।
शुक्रं चस्कन्द तद्वायुरग्नौ प्रास्तं(४) यदृच्छया ॥८७॥
ततोऽर्चिर्भ्यो भृगुर्जज्ञे अङ्गारेभ्योऽङ्गिरा(क)(५) ऋषिः ।
प्रजापतिस्तुतौ दृष्ट्वा दृष्टा वागभ्यभाषत ॥८८॥
आभ्यामृषिस्तृतीयोऽपि भवेदत्रैव मे सुतः ।
प्रजापतिस्तथेत्युक्तः प्रत्यभाषत भारतीम् ॥८९॥
ऋषिरत्रिस्ततो जज्ञे सूर्यानलसमद्युतिः ।
योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ॥१००॥

(१) परीक्षः इति ग० ।
(२) अभिधानकाः इति ख०, अभिधानिकाः इति ग० ।
(३) शरीरिणीति मुद्रः पाठः ।
(४) प्रास्यमिति ख०, प्रास्येति ग० ।
(५) अङ्गारत्वाङ्गिरा इति ख०, यङ्गारेभ्वङ्गिरा इति ग० ।

(क) ऋ० १, ३१, १ ।

बृहस्पतेर्भरद्वाजो विद्धीति[१] य उच्यते[२] ।
मरुत्वाश्चोद्धुरर्यश्च[३] स एवाङ्गिरसो नपात्[क] ॥१०१॥
सपुत्रस्य तु तस्येदं[४] मण्डलं षष्ठमुच्यते ।
त्वं ह्यग्न इति तत्रादावाग्नेयानि त्रयोदश ॥१०२॥
सूक्तानि त्रीणि मूर्द्धानमग्नेर्वैश्वानरस्य तु ।
एकान्नविंशतिश्चैव[५] पिबेन्त्यैन्द्राण्य[६]तः परम् ॥१०३॥
अग्ने सचे यदित्यस्यां द्वौ देवौ तु[७] निपातितौ ।
प्रीतये नूम[८] इत्येते वैश्वदेव्यावृचौ तु ते[९] ॥१०४॥
ऋग्द्वितीया पदस्यान्त्यमैन्द्रमेति[१०] गवां स्तुतिः ।
आयस्तापाय[ख] इत्यस्यां वायुरिन्द्रश्च संस्तुतौ[११] ॥१०५॥
इन्द्रः प्राधान्यतो वाच स्तुतो वायुर्निपातभाक् ।

---

(१) विदधीतीति घ० ।
(२) प्रजावान् जीवपुत्रो वा इत्यादि विदधीति य उच्यते इत्यन्तपाठः क० ग० च० चिह्नितपुस्तकेषु नास्त्येव ।
(३) भुवन्यश्चेति क० ग० च०, गुरोर्यश्चेति ख० ग० ।
(४) सपुत्रस्य तस्यैतदिति क० ग० घ० च० ।
(५) एकान्नत्रिंशदेवाग्नेति ख०, एकान्नत्रिंशदेवाग्नेति घ० । एकान्नविंशतिरिति भवितुमर्हति ।
(६) पिबन्त्यैन्द्राणीति पाठः शुद्धः ।
(७) देवौ याविति क० ग० घ० च० ।
(८) नम इति क० ग० च० ।
(९) स्तुते इति घ० ।
(१०) चेतीति ग० ।
(११) इन्द्रवायू सह स्तुताविति घ० पुस्तकान्तरस्थ ।

---

(क) ऋ० १, १४२, १ । (ख) ऋ० ६, ३७, ३ ।

अयं देवस्तृचं सौम्यमैन्द्रमेके प्रचक्षते[१] ॥१०६॥

शरीरं चक्षुरित्यस्यां ऋचोऽधीति[२] ऋचोः[क] स्तुतिः[३]।

पितरं स्तौति यंयु[ख]श्च ऋचस्यान्ते पदे स्वयम्[४] ॥१०७॥

स्वादु[ग]ष्किलायमित्येताः पञ्चर्चः सौम्य एव वा[५]।

इन्द्रः प्रधानतो वात्र स्तुतः सोमो निपातभाक् ॥१०८॥

इन्द्रस्यैन्द्रनिपातोऽयं स्तूयन्ते ह्यैतरेयके[६]।

अगव्यूति[घ] स्तौति देवान् पादो भूमिमयोत्तरः ॥१०९॥

बृहस्पतिं तृतीयोऽस्तौत्[७] त्विन्द्र[८]मेवोत्तमं पदम्।

ऋषिस्तु तौ तथेत्युक्त्वा पायुं[ङ] पुत्रमभाषत ॥११०॥

अथर्वणोयौ शत्रूणां कुरुष्वैतौ[९] नृपाविति।

पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ॥१११॥

जीमूतस्येति[१०] सूक्तेन पृथक्त्वेनान्वमन्त्रयत्।

---

(१) इन्द्रः प्राधान्यतो वात्रेति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

(२) ऋधीतिरिति विसर्गयुक्तपाठः शुद्धः।

(३) य आनयदिति तस्य ऋचोऽधीति ऋचुस्तुतिरिति क० ग० घ० च०।

(४) सूक्तस्यान्ते पदे स्वकमिति ख० ङ० पुस्तकान्तरञ्च।

(५) इति तु सौम्यः पञ्चर्च उत्तरः इति क० ग० च०।

(६) इन्द्रः प्रधानतो वात्रेत्यादि स्तूयन्ते ह्यैतरेयके इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते। स्तूयते इति शुद्धः पाठः।

(७) तृतीयस्त्विति क० ङ० पुस्तकान्तरञ्च।

(८) त्वैन्द्रमिति पाठः साधुः।

(९) कुरु पुत्रेति ख० पुस्तकान्तरञ्च।

(१०) जीमूतीयेनेति क० घ० च०, जीमूतस्येवेति ग०।

---

(क) ऋ० ६, ७५, २३। (ख) ऋ० १, २४, ६। (ग) ऋ० ६, ४४, २१।
(घ) ऋ० ६, ४७, २०। (ङ) ऋ० २, २, ४।

प्रथमा तस्य सूक्तस्य योद्धारं स्तौति वर्म्मिणम् ॥११२॥
धनुः स्तौति[१] द्वितीया तु तृतीया ज्याभिमन्त्रिणी[२]।
स्तौति चार्त्नीं[क] चतुर्थी त्वि[३]षुधिं स्तौति पञ्चमी ॥११३॥
अर्ज्जुन[४] सारथिं षष्ठ्या रथयोऽर्ज्जुन संस्तुताः।
अश्वांस्तु सप्तमी स्तौति आयुधागारमष्टमी ॥११४॥
नवमी रथगोपांस्तु दशमी रणदेवताः।
इषुमेकादशी[५] स्तौति द्वादशी कवचस्तुतिः ॥११५॥
त्रयोदशी कशां स्तौति हस्तघ्नं चतुर्दशी।
प्रथमे पञ्चदश्यास्तु पादे दिग्ध[६] इषुः स्तुतः[७] ॥११६॥
अयोमुखी द्वितीये तु अर्द्धऽस्त्रं[८] वारणं परम्[९]।
षोडश्यां[१०] तस्य सूक्तस्य धनुर्मुक्त इषुः स्तुतः ॥११७॥
सप्तदश्यां तु युद्धादेः[११]कवचस्य च बन्धनं[१२]।

---

(१) धनुश्चेति क॰ ख॰ घ॰।
(२) ज्याभिमन्त्रिणीति क॰ ख॰ घ॰।
(३) स्तौत्युगार्त्नीं चतुर्थी चेति क॰ ग॰ ख॰ घ॰।
(४) पार्थेनेति क॰ ख॰ घ॰।
(५) इषुधिश्चैकादशीति क॰ ख॰ घ॰, इषुश्चैकादशीति ग॰।
(६) दिग्ध्यः इति ग॰।
(७) इषुस्तुतः इति ग॰ ङ॰।
(८) अर्द्धर्चमिति ख॰।
(९) परे इति ख॰।
(१०) षोडश्येति क॰ ग॰ ख॰ घ॰।
(११) युद्धदेशेति क॰ ख॰ घ॰, योद्धादेरिति ख॰।
(१२) मध्यतः इति क ग ख॰ घ॰।

---

(क) ऋ॰ ६, ७५, ४।

स्तुतिरष्टादशी ज्ञेया युयुत्सोर्द्व्यृगुत्तमा[१] ॥११८॥
अग्न्यास्ते चोत्तमे पादे ह्यृषि[२]रात्मन आशिषः।
सूक्तेनानेन तु स्तुत्वा सङ्ग्रामाङ्गान्यृषिस्तयोः ॥११९॥
ततः[३] प्रस्थापयामास पुनर्वारशिखान्[४] प्रति।
एतद्युक्ते चतस्रभी राज्ञोः साहाय्यकाङ्क्षया ॥१२०॥
भरद्वाजोऽभितुष्टाव प्रीतस्तेन पुरन्दरः।
अभ्यावर्त्तिनमासाद्य यव्युपीयानदीतटे ॥१२१॥
सचितस्तायमानेन[क] जघानैतान् शचीपतिः[५]।
एवं[६] वारशिखा[७]न्हित्वा तावभ्यावर्त्ति[८]चायमानौ[ख] ॥१२२॥
भरद्वाजाय गुरवे ददतुर्विविधं वसु।
भरद्वाजस्य गर्गस्य दृष्टाविन्द्रेण वै पथि ॥१२३॥
द्वौ च[९] प्रस्तोक[ग] इत्याभिर्दानं तस्मै[१०] प्रशंसतुः।

---

(१) स्तुतिरुत्तमेति क॰ ग॰ घ॰ च॰।
(२) ऋषिरिति ङ॰।
(३) तयोरिति क॰ घ॰ च॰।
(४) वारिशिखानिति ग॰।
(५) एतद्युक्ते चतस्रभिरित्यादि जघानैतान् शचीपतिरित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(६) तौ त्विति क॰ ग॰ घ॰ च॰।
(७) वारिशिखानिति ग॰।
(८) ततोऽभ्यावर्त्तीति क॰ ग॰ घ॰ च॰।
(९) द्वयानिति क॰ ग॰ घ॰ च॰।
(१०) तद्वै इति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ ६, २७, ८। (ख) ऋ॰ ६, ४७, २५। (ग) ऋ॰ ६, ४७, २२।

(१)प्रसङ्गादिह(२) याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥

ता एव सूक्तभाजस्तु मेने राथीतरीसुतः(३) ।

प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्(क) ॥१२५॥

तस्य देव्योऽभवञ्जाया(४) दाक्षायण्यस्त्रयोदश ।

अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः(६) ॥२२६॥

क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा ।

कद्रुश्चैवेति दुहितॄः कश्यपाय ददौ स च(७) ॥१२७॥

तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः ।

वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥

तत्रैका त्वदितिर्देवी द्वादशाजनयत्(८) सुतान् ।

भगश्चैवार्य्यमांश(क)श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—

ऋषिरप्यभितुष्टाव दाशं तत्र च तस्य तु ।

ऋचैकया इर्षां चक्रे दत्तं तच्चैत्तेयन् स्वयम् ॥

इत्यधिकं पठितम् ।

(२) प्रसङ्गा त्विहेति क॰ ग॰ घ॰ च॰ ।

(३) राथीतरसुताविति क॰ घ॰ च॰ ।

(४) मुनिरिति क॰ ग॰ घ॰ च॰ ।

(५) जाता इति क॰ घ॰ च॰ ।

(६) वियाविति ख॰ ।

(७) अदितिरित्यादिसार्द्धैकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।

(८) द्वन्दशोऽजनयदिति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ २. १, ४ ।

धाता चैव विधाता च विवस्वांश्च महाद्युतिः।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते[१] ॥१२०॥
द्वन्द्वं तस्यास्तु तज्जज्ञे[२] मित्रश्च वरुणश्च ह[३]।
तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ॥१२१॥
रेतश्चस्कन्द कुम्भे तु[४] न्यपत[५]द्वासतीवरे।
तेनैव तु मुहूर्तेन वीर्य्यवन्तौ तपस्विनौ ॥१२२॥
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः।
बहुधा पतिते शुक्रे कलशेऽथ जले स्थले ॥१२३॥
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः।
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः[६] ॥१२४॥
उदियाय ततोऽगस्त्यः शम्या[क]मात्रो महायशाः[७]।
मानेन सम्मितो यस्मात् तस्मान्मान्य इहोच्यते ॥१२५॥
यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि[८] मीयते।

(१) अतःपरमर्द्धश्लोकः ... इत्यर्द्धश्लोकः ख० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(२) ...द्यति इति ङ०।
(३) मित्रस्य वरुणस्य चेति क० ख० ग० घ०, चश्चेति ख० ग०।
(४) तत्कुम्भे इति ग० ङ० पुस्तकान्तरञ्च।
(५) न्यपतदिति ख० ङ० पुस्तकान्तरञ्च।
(६) बहुधा पतिते शुक्रे इत्यादिसार्द्धैकश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।
(७) महातपाः इति ख० ङ० पुस्तकान्तरञ्च।
(८) कुम्भे नावोहेति क० घ० च०।

(क) ऋ० १, ८३, ४।

[1]प्रसङ्गादिह[2] याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥
ता एव सूक्तभाजस्तु मेने राथीतरीसुतः[3]।
प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्[4] ॥१२५॥
तस्य देव्योऽभवञ्जाया[5] दाक्षायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः[6] ॥१२६॥
क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।
कद्रुश्चैवेति दुहितॄः कश्यपाय ददौ स च[7] ॥१२७॥
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥
तत्रैका त्वदितिर्देवी द्वादशाजनयत्[8] सुतान्।
भगश्चैवार्य्यमांश[9]श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—
ऋषिरप्यभितुष्टाव दानं तत्र च तस्य तु।
ऋचैकया दर्या धर्मे दत्तं सङ्कीर्त्तयन् स्वयम्॥
[illegible] ऋषिभिः पठितम्।
(४) चैन्द्रमिति ङ॰ पुस्तकान्तरे [illegible]
(५) स्तोमभागांस्ततः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(७) वासिष्ठाश्च वसिष्ठश्चेति पाठः सङ्गतः। वसिष्ठाश्च वसिष्ठाश्चेति क॰ च॰, वसिष्ठाश्च वसिष्ठाश्चेति ग॰ घ॰।
(८) सर्व्वसर्व्वेषु यज्ञेषु दक्षिणीयतमास्तथेति क॰ घ॰ च॰।
(९) येऽध्यापोति क॰ ग॰ घ॰ च॰।
(१०) वसिष्ठाः सदस्याः सुक्तु कर्हिचिदिति क॰ ग॰ घ॰ च॰।

अर्दयेद्[1] दक्षिणाभिस्तान् भालवेयी श्रुति[2]स्त्वियम्[3] ।
ऋषिस्तु मैत्रावरुणिः सूक्तैः षोडशभिः परैः ॥१४२॥
तुष्टाव चाग्नि[क]मित्यग्निमाग्नस्तच जुषस्व नः[ख] ।
प्राग्नये[ग]ऽथ प्रसम्राजो[घ] द्वितीयं प्राग्नये[ङ] त्वचम् ॥१४३॥
वैश्वानरीयाण्येतानि[4] त्वे ह[च]न्द्राणि पराण्यतः ।
दश पञ्च च सूक्तानि निपातो मरुतां स्तुतिः ॥१४४॥
नकिः सुदास[छ] इत्यस्यां दानं पैजवनस्य तु ।
वसिष्ठेन चतुर्भिस्तु[5] द्वे नप्तु[ज]रिति कीर्त्तितम् ॥१४५॥
संवादः सूक्तमैन्द्रं[6] वाश्विन्यं तन्तु[7] प्रपद्यते ।
वसिष्ठागस्त्ययोश्च कीर्त्यते तनयैः सह ॥१४६॥
इन्द्रेण चैव संवादो महिमा जन्म कर्म च।

---

(१) पूजयेदिति ख० ङ० पुस्तकान्तरञ्च ।
(२) स्तुतिरिति क० घ० च० ।
(३) दध्यर्थे भालवी श्रुतिरिति ख० ङ० ।
(४) वैश्वानरीयमित्येतदिति क० घ० च० ।
(५) चतुर्भिस्त्विति क० ग० घ० च० ।
(६) संवादमैन्द्रसूक्तमिति ङ० पुस्तकान्तरञ्च, संवादे सूक्तमैन्द्रे इति ख० ।
(७) वाश्विन्यं वस्त्विति क० ग० घ० च० ।

(क) ऋ० ७, १, १ । (ख) ऋ० ७, २, १ । (ग) ऋ० ७, ५, १
(घ) ऋ० ७, ६, १ । (ङ) ऋ० ७, १३, १ । (च) ऋ० ७, १८, १
(छ) ऋ० ७, १९, १० । (ज) ऋ० ७, १८, २२ ।

पराणि प्रे(क)ति चत्वारि वैश्वदेवानि यानि(१) च ॥२४७॥

स्तौत्यृगणा(ख)मग्निं तव मानो(ग)ऽहिर्बुध्न्य(घ) एव च ।

अहिरावहन्ति मेघान् स एति वा तेषु मध्यमः ॥१४८॥

योऽहिः स बुध्न्यो बुध्नेति सोऽन्तरिक्षेऽभिजायते(२) ।

उदुष्य(ङ)सवितुः सूक्तं(३) प्राचो (च)वाजिनदेवताः(४) ॥१४९॥

द्युषो(५)ऽर्द्धर्चस्य पादोऽत्र प्रथमायामृचि स्तुतः(६) ।

पादस्यैव तृतीयोऽत्र प्रथमायामृचि स्तुतः(७) ॥१५०॥

यथार्द्धर्चौ भगस्तुप(छ)स्तथा नूनं भगो(ज)ऽपि च ।

स हि रत्नानि सविता सुवातीति भगः स वा(८) ॥१५१॥

---

(१) तचेति ख॰ ङ॰ पुस्तकान्तरञ्च ।

(२) अहिरावहन्तीत्यादि सोऽन्तरिक्षेऽभिजायते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।

(३) सूक्ते इति ख॰ ङ॰ ।

(४) वाजिनदेवत इति ख॰ ङ॰ पुस्तकान्तरञ्च ।

(५) द्युषः इति ग॰ ।

(६) द्युषोऽर्द्धस्य भागोऽत्र भगस्तुप इति स्तुतिरितीति ख॰ ङ॰ पुस्तकान्तरञ्च । स्तुतिरित्यत्र स्तुतः इति ग॰ ।

(७) प्रथमायामृचिदैवतः इति क॰ ग॰ घ॰ च॰ ।

(८) एष श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।

---

(क) ऋ॰ ७, ३५, १ । (ख) ऋ॰ ७, ३४, १६ । (ग) ऋ॰ ७, ३४, १७ । (घ) ऋ॰ ७, ३४, १७ । (ङ) ऋ॰ ७, ३८, १ । (च) ऋ॰ ७, ३८, ७ । (छ) ऋ॰ ७, ३८, ६ । (ज) ऋ॰ ७, ४१, ५ ।

पराणि प्रे(क)ति चत्वारि वैश्वदेवानि यानि(१) तु ॥१४७॥
स्तौत्यृगन्ता(ख)महिं तव मानो(ग)ऽहिर्बुध्न्य(घ) एव च।
अहिराहन्ति मेघान् स एति वा तेषु मध्यमः ॥१४८॥
योऽहिः स बुध्न्यो बुध्नेति सोऽन्तरिक्षेऽभिजायते(२)।
उदुंष्य(ङ)सवितुः सूक्तं(३) प्रथो (च)वाजिनदेवता(४) ॥१४९॥
हृषो(५)ऽर्द्धर्चस्य पादोऽत्र प्रथमायामृचि स्तुतः(६)।
पादस्यैव तृतीयोऽत्र प्रथमायामृचि स्तुतः(७) ॥१५०॥
यथार्द्धर्चो भगमुप(छ)स्तथा नूनं भगो(ज)ऽपि च।
स हि रत्नानि सविता सुवातीति भगः स वा(८) ॥१५१॥

---

(१) यानीति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) अहिराहन्तीत्यादि सोऽन्तरिक्षेऽभिजायते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(३) सूक्ते इति ख॰ ङ॰।
(४) वाजिनदेवत इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) [illegible] इति ...

---

(१) प्राक्ते इति ग॰।
(२) वैश्वदेवे तथा प्राक्ते इत्यादि स्तुतिरित्यन्तपाठः क॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।

---

(क) ऋ॰ ७, ४०, १।

# अथ षष्ठोऽध्यायः।



आ मा[क]मिति तु सूक्तेन प्रत्यृचं देवताः स्तुताः।
मित्रावरुणावग्निश्च देवा नद्यस्तथैव च[१] ॥१॥
द्यावादित्यदेवत्यौ रोदस्योः प्रे[ख]ति यस्तृचः।
वास्तोष्पत्यस्ततस्त्व[२] प्रस्तापिन्य स्वचः स्तुताः[३] ॥२॥
परं[४] चत्वारि सूक्तानि मारुतानि क ई[ग]मिति।
तेषां तु पितरं देवं त्र्यम्बकं[घ] सौत्यृगुत्तमा ॥३॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्य[ङ]दिति सप्तभिः।
अश्विनौ तु स्तुतौ[५] देवावष्टभिः प्रति वा[च]मिति ॥४॥
यद्[छ]द्योत्सूर्य[ज] इति तिस्र उ[झ]देतीत्यर्द्धपञ्चमाः।
सौर्यं तच्चक्षु[ञ][६]रिति तु गीयते चक्षुर्देवता ॥५॥

---

(१) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितम्।
(२) स्त्विति क० ग० घ० च०।
(३) स्तुतौ प्रस्तापनौ स्तुता इति क० ग० घ० च०।
(४) ततः इति ख० ङ० पुस्तकान्तरयोः।
(५) परैरिति क० ग० घ० च०।
(६) तच्चक्षु तच्चक्षुरिति ख० ङ० पुस्तकान्तरयोः।

---

(क) ऋ० ७, ५०, १। (ख) ऋ० ७, ५३, १। (ग) ऋ० ७, ५६, १
(घ) ऋ० ७, ५९, १२। (ङ) ऋ० ७, ६०, १। (च) ऋ० ७, ६५, १।
(छ) ऋ० ७, ६०, १। (ज) ऋ० ७, ६२, १। (झ) ऋ० ७, ६३, १।
(ञ) ७, ६६, १६।

आदित्यानां तद्वो(क) अद्य द्वे ऋचौ शौनकोऽब्रवीत् ।
अन्याः सर्व्वा ऋचः सौर्य्या यदद्याद्याः(ख)प्रकीर्त्तिताः ॥६॥
इमे चेतार(ग) इत्याद्याः(१) सूक्ते मित्रो मितः स्तुतः ।
अर्य्यमणो वरुणश्चापि मित्रश्चैता नव स्तुताः ॥७॥
यदद्य सूरे(घ) इत्याद्या इमादित्या ऋचः स्तुताः ।
सविता चा(२)दितिर्मित्रो वरुणश्चार्य्यमा भगः ॥८॥
स्तुता उदु त्य(ङ)दित्येतास्तिस्रः सौर्य्यास्ततः पराः ।
आग्नीस्तस्थु(च)रित्येतामाचार्य्यः शौनकोऽब्रवीत्(३) ॥९॥
उषास्तु सप्तभिर्व्युषाः(छ) सूक्तान्येभ्यः पराणि तु ।
चत्वारीन्द्रावारुणानि(४) इन्द्रावरुणयोः स्तुतिः ॥१०॥
उदु ज्योति(ज)रिति त्वस्मिन्नूर्द्ध्वं मध्यमः स्तुत(५) ।
वरुणस्य गृहान्प्राप्तो वसिष्ठः स्वप्न(६) आचरत् ॥११॥
प्रविवेशाथ तं तत्र श्वा नदन्नभ्यवर्त्तत(७) ।

---

(१) इत्याद्यैरिति पाठ सङ्गतार्थं ।
(२) वेति ख० ङ० ।
(३) आदित्यानां तद्वो अद्येत्यादयश्चत्वारः श्लोकाः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यन्ते ।
(४) इन्द्रावरुणेतीति क० ग० घ० च० ।
(५) एतच्छ्लोकार्द्धं क० ग० घ० चिह्नितपुस्तकेषु नास्त्येव ।
(६) चौर्य्यमिति ङ० ।
(७) अभ्यधावतेति क० ग० घ० च० ।

---

(क) ऋ० ७, ६६, १२ । (ख) ऋ० ७, ६६, ४ । (ग) ऋ० ७, ६०, ५ ।
(घ) ऋ० ७, ६६, ४ । (ङ) ऋ० ७, ६६, १४ । (च) ऋ० ७, ६६, १६ ।
(छ) ऋ० ७, ७५, १ । (ज) ऋ० ७, ७६, १ ।

क्रन्दन्तं सारमेयं स धावन्तं द्रष्टुमुद्यतं ॥१२॥
यदर्जुने(क)ति च त्रिभिः सान्त्वयित्वा व्यसुष्वपत्(१) ।
स तं(२) प्रस्वापयामास जनमन्यञ्च वारुणम् ॥१३॥
ततस्तु वरुणो राजा स्वान् पाशान् प्रत्यमुञ्चत(३) ।
स बद्धः(४) पितरं सूक्तैश्चतुर्भिरिति उत्तरैः(५) ॥१४॥
अभितुष्टाव धीरे(ख)ति सुमोचैनन्ततः पिता ।
ध्रुवासु त्वे(ग)ति चोक्तायां पाशा अस्मादमोचिरे(६) ॥१५॥
पराणि त्रीणि सूक्तानि वायव्यानि प्रवीरया(घ) ।
अथ तास्त्वै(७)न्द्रवायव्याः स्मृतो(८) यास्तु(९) दिवन्स्तुतिः ॥१६॥
प्रवीरयोक्ता वायव्याः सा तु(१०) गीत्यैतरेयके ।

---

(१) क्रन्दन्तमित्यादि सान्त्वयित्वा व्यसुष्वपदित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।
(२) एवमिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(३) स्वैः पाशैः प्रत्यबध्यत इति क॰ ग॰ घ॰ च॰ ।
(४) बुद्धेति क॰ घ॰ च ।
(५) बद्धः स वारुणैः पाशैः ध्रुवासु त्वेति दृश्यते इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) मुमुचिरे इति पाठ शुद्धः ।
(७) चेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(८) स्तुताविति क॰ ग॰ घ॰ च॰ ।
(९) यास्त्विति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(१०) प्राक्विति ख॰ ।

---

(क) ऋ॰ ७, ५५, २ । (ख) ७, ८६, १ । (ग) ऋ॰ ७, ८८, ७ । (घ) ऋ॰ ७, ९०, १ ।

पदस्य व्यत्ययं कृत्वा वायोः प्राधान्यमुच्यते ॥१७॥
ते सत्येन हृचौ यावत्तरस्तुर्चश्च पुनः ।
उग्रन्तेका[क] प्रसोता[ख] चर्गद्वयोरेता नव स्मृताः[१] ॥१८॥
ऐन्द्राग्ने शुचि[ग]मित्येते प्रेति[घ] सारस्वते परे ।
स्तुतश्चैव सरस्वांस्तु[२] जनियन्त[ङ]स्तुर्चैः[३] ॥१९॥
राजा वर्षसहस्राणि[४] दीर्घियश्चाऽऽप्यः पुरा ।
चचारैकरथेनेमां भुवन् सर्व्वाः समुद्रगाः ॥२०॥
यज्ञे वहत भागान् मे[५] इन्द्रमो वाप्यनेकशः[६] ।
प्रत्यूचुस्तं नृपं नद्यस्त्वल्पवीर्याः कथं वयं ॥२१॥
वहेम भोगान् सर्वांस्ते सत्रे वार्षसहस्रिके[७] ।

---

(१) प्रवीरयोश्च वायव्या इत्यादि द्वयोरेता नव स्मृता इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नालोक्यते ।
(२) देवा सरस्वान् स इतीति ङ॰ पुस्तकान्तरम् । देवा इत्यत्र दृचे इति ख॰ ।
(३) चतसृभिरिति क॰ घ॰ च॰ चतिसृभिरिति ग॰ ।
(४) वर्षसहस्रायेति ख॰ ग॰ ङ॰ पुस्तकान्तरम् ।
(५) भोगान् मे इति पाठो युक्तः उत्तरत्र बहुवचनात् । ऽपवत मां सर्व्वामिति क॰ घ॰ च॰, वहत भागान् मे इति ग॰, वहत भाः सर्व्वाः इति ङ॰ ।
(६) वाप वेकशः इति क॰ ङ॰ ग॰ घ॰ च॰ ।
(७) वर्षसहस्रके इति ख॰ ङ॰ ।

---

(क) ऋ॰ ७, ९१, २ । (ख) ऋ॰ ७, ९२, २ । (ग) ऋ॰ ७, ९३, १ ।
(घ) ऋ॰ ७, ९५, १ । (ङ) ऋ॰ ७, ९६, ४ ।

सरस्वतीं प्रपद्यस्व सा त्वा(१) वक्ष्यति नाहुष ॥२२॥
तथेत्युक्त्वा जगामाशु आपगां(२) स सरस्वतीम्।
सा चैनं प्रतिजग्राह दुदुहे च पयो घृतम्(३) ॥२३॥
एतदत्यद्भुतं कर्म सरस्वत्या नृपं प्रति।
वारुणिः(४) कीर्त्तयामास प्रथमस्य द्वितीयया ॥२४॥
द्वे बार्हस्पत्ये ऐन्द्रे च(५) वैष्णवे तु(६) परे ततः।
उत्तमैन्द्र्यथ तिस्रः(क) स्युः(७) पञ्चन्ये तिस्र उत्तरे ॥२५॥
आग्नीर्धक् प्रथमा तत्र प्रथमस्य तृतीयया।
यज्ञे आग्नेन्द्रमेवास्तौदन्या लिन्द्राबृहस्पती(८) ॥२६॥
तृतीया नवमी चैव स्तौतीन्द्राब्रह्मणस्पती(९)।

---

(१) ते इति ख॰ छ॰ पुस्तकान्तरञ्च।
(२) जगामाथ पावनीमिति ख॰ छ॰ पुस्तकान्तरञ्च।
(३) प्रतिजग्राह वा चैनं पय सर्पिश्च दुह्यतीति क॰ ग॰ घ॰ च॰।
(४) वारुण इति ख॰।
(५) ऐन्द्रे पञ्चे दिव' सूक्ते इति क॰ घ॰ च॰, पञ्चे बार्हस्पत्यमैन्द्र-मिति ग॰।
(६) चेति ख॰ छ॰ पुस्तकान्तरञ्च।
(७) दृचौ द्वितीयोक्तमैन्द्रेति क॰ घ॰ च॰।
(८) आग्नीर्धक् प्रथमा तथेत्यादि चान्या लिन्द्रा बृहस्पती इत्यन्तपाठ' क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते। तेषु चास्मिन् स्थले, स्तौतीन्द्रं प्रथमा तत्र द्वितीयाया बृहस्पति। इति श्लोकार्द्धं वर्त्तते।
(९) चऐन्द्राब्रह्मणस्पती इति ख॰ छ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ ७, १०१, १।

संवत्सर[क]न्तु माण्डूकमैन्द्रासोमं[१] परन्तु यत् ॥२७॥
ऋषिर्ददर्श रक्षोघ्नं[२] पुत्रशोकपरिप्लुतः ।
हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा[३] ॥२८॥
ये पाकशंस[ख]स्त्वृक् सौम्या[४] आग्नेयी तत उत्तरा ।
एकादशी वैश्वदेवी सौम्यस्तस्याः परो तृचः[५] ॥२९॥
यदि वाह[ग]स्त्वृगाग्नेयी ऐन्द्री यो मे[घ]ति तु स्मृता[६] ।
ग्रावाणी प्रयाजिगाती[ङ]ति वितिष्ठध्वं[च] तु मारुती ॥३०॥
प्रवर्त्तये[छ]ति पञ्चेन्द्र ऐन्द्रासोमीत्यृगुत्तमा ।
ऋषिस्त्वाग्निमाशास्ते मानो रक्ष[ज] इति तृचि[७] ॥३१॥
दिवस्चैव पृथिव्याश्च तथा पालनमात्मनः ।
उलूक यातुं[झ][८] जह्येतास्त्वाशाश्वपास्त्विमाचरान्[९] ॥३२॥

---

(१) मण्डूका इन्द्रासोममिति ख० ङ० पुस्तकान्तरञ्च ।
(२) राक्षोघ्नमिति क० घ० ङ० च० ।
(३) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(४) सौम्याविति ङ० ।
(५) द्वयः इति ग० ।
(६) यो मेतीन्द्र स्तुतोऽर्द्धयेति ङ० पुस्तकान्तरञ्च ।
(७) तृचे इति क० घ० च० ।
(८) यात्विति क० ख० ग० घ० च०, यान्त्विति पुस्तकान्तरम् ।
(९) स्य श्लोकः क० घ० च० चिह्नितपुस्तकेष नेष्यते ।

---

(क) ऋ० ७, १०३, १ । (ख) ऋ० ७, १०४, ९ । (ग) ऋ० ७, १०४, १४ । (घ) ऋ० ७, १०४, १६ । (ङ) ऋ० ७, १०४, १७ । (च) ऋ० ७, १०४, १८ । (छ) ऋ० ७, १०४, १९ । (ज) ऋ० ७, १०४, २३ । (झ) ऋ० ७, १०४, २२ ।

पञ्चदश्यान्तु सूक्तस्याष्टम्यां(१) चैव वारुणिः ।
दुःखशोकपरीतात्मा शपते विलपन्निव ॥२३॥
हते पुत्रशते तस्मिन्(२) वसिष्ठो दुःखितस्तदा ।
रक्षोभूतेन शापात्तु सुदासेनेति नः श्रुतं(३) ॥२४॥
कण्वश्चैव प्रगाथश्च घोरपुत्रौ बभूवतुः ।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥२५॥
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरःस्वपन्(४) ।
कृत्वा कनीयान् कण्वस्योत्सङ्गावन्वबुध्यत(५) ॥२६॥
अस्नुकामस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया ।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥२७॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः ।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥२८॥
स घौरो(६) वाथ काण्वो वा वंशजैर्वंशभिः पितुः ।
ददर्शान्यैश्च सहितः ऋषिर्मण्डलमष्टमम् ॥२९॥

---

(१) अष्टम्यामिति क॰ ग॰ घ॰ च॰ ।
(२) क्रुद्धा इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(३) वै श्रुतिरिति क॰ ग॰ घ॰ च॰ ।
(४) शिरःश्रमादिति क॰ घ॰ च॰ । शिरःस्वपदिति ख॰ ग॰ ।
(५) उत्सङ्गेनावबुध्यतेति क॰ घ॰ च॰ । कण्वस्योत्सङ्गेन त्वबुध्यतेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) घोरः इति क॰ ख॰ घ॰ च॰ ।

माचिदि[क]न्द्राणि चत्वारि अन्यस्य स्तूर[ख]मित्यृचि ।
तुष्टावाङ्गिरसी नारी वसन्तौ[1] प्रश्यती[ग] पतिम् ॥ ४० ॥
स्त्रिय सन्त[2] पुमांसन्तमासङ्ग स्तुतवानृषि[3] ।
* स्वस्य[4] दान स्तुवी[घ]त्यृग्भिस्तुभिः परिकीर्त्तितम् ॥ ४१ ॥
ग्निचे[ङ]त्यृगभ्या तु काण्वस्य विभिन्दोः परिकीर्त्तितम् ।
पाकस्थाम्नस्तु[5] भोजस्य चतुर्भिर्यमिति[च] स्तुतम् ॥ ४२ ॥
पौष्णौ प्रेति[छ] प्रगाथौ द्वौ[6] मन्यते शाकटायन ।
ऐन्द्रमेवाथ पूर्वन्तु गालव पौष्णमुत्तरम्[7] ॥ ४३ ॥
ऐन्द्राणामिह सूक्तानामुत्तमस्योत्तमे तृचे ।
दान राज्ञ कुरुङ्गस्य स्तूर राध[ज] इति स्तुत ॥ ४४ ॥
दूरा[झ]दित्याश्विने सूक्ते सप्तचित्रन्तामे[ञ] यथा ।

---

(१) वसन्ताविति ख० । वसताविति ङ० ।
(२) त्यन्तमिति ग० ।
(३) नास्त त स्तुतवान्दमिरिति ङ० पुस्तकान्तरञ्च ।
(४) तस्येति ख० ङ० पुस्तकान्तरञ्च ।
(५) चेति ख० ङ० ।
(६) त्विति ख० ङ० पुस्तकान्तरञ्च ।
(७) उत्तमनिति ङ० ।

---

(क) ऋ० ८, १, १ । (ख०) ऋ० ८, १, ३४ । (ग) ऋ० ८, १, ३४ ।
(घ) ऋ० ८, १, ३० । (ङ) ऋ० ८, २, ४१ । (च) ऋ० ८, ३, २१ ।
(छ) ऋ० ८, ४, १५ । (ज) ऋ० ८, ४, १९ । (झ) ऋ० ८, ५ १ ।
(ञ) ऋ० ८, ५, ३७ ।

तत्रार्द्धर्चौ[१] दृच[२]स्त्वान्यः कपोर्दानस्तवः स्मृतः ॥४५॥
महानितौ[क]न्द्रदैवत्यमग्निं वैश्वानरं स्तुतम्[३] ।
मन्यते शाकपूणिस्तु भार्म्यश्व[४]श्चैव मुद्गलः ॥४६॥
वृषे तु मत[ख]मित्यस्मिन् दानं तैरिन्द्रिरं स्तुतम् ।
परन्तु मारुतं प्रेति[ग] त्वान[घ]स्त्वौष्या[ङ]श्विनानि च[५] ॥४७॥
त्व[च]माग्नेयं य इन्द्रे[छ]ति षडैन्द्राण्युत्तमस्य तु ।
उपोत्तमायामर्द्धर्चे देवो वास्तोष्पतिः[ज] स्तुतः ॥४८॥
इद[झ]मादित्यदेवत्यं तिसृभिस्त्वदितिः[ञ] स्तुता[६] ।
षष्ठ्यां चतुर्थीसप्तम्योरुते[ट]त्याश्विन्यृगष्टमी[७] ॥४९॥
स्तुताः श्य[ठ]मिति पञ्चोक्ता[८]मग्निसूर्य्यानिलास्त्रयः ।

---

(१) इत्यर्द्धर्चः इति ख० ङ० पुस्तकान्तरञ्च ।
(२) तृचः इति क० घ० ङ० च० ।
(३) महानैन्द्रं प्रत्नवत्यामग्निर्वैश्वानरः स्तुतः इति क० ग० घ० च० ।
(४) भार्म्यश्वः इति ङ० ।
(५) चतः इति ख० ङ० पुस्तकान्तरञ्च ।
(६) तथेति क० ङ० पुस्तकान्तरञ्च ।
(७) षष्ठ्यां चतुर्थ्यां सप्तम्योतेत्याश्विन्यृगष्टमीति क० घ० च० ।
(८) पञ्चस्विति क० ग० घ० च० ।

---

(क) ऋ० ८, ६, १ । (ख) ऋ० ८, ६, ४६ । (ग) ऋ० ८, ७, १ ।
(घ) ऋ० ८, ८, १ । (ङ) ऋ० ८, ८, २३ । (च) ऋ० ८, ११, १ ।
(छ) ऋ० ८, १२, १ । (ज) ऋ० ८, १७, १४ । (झ) ऋ० ८, १८, १ ।
(ञ) ऋ० ८, १८, ६ । (ट) ऋ० ८, १८, ८ । (ठ) ऋ० ८, १८, ९ ।

वरुणार्य्यममित्राणां प्रगाथोऽय[१]मिति स्तुतिः[२] ॥५०॥
आग्नेये स्तुतौ राजर्षेस्त्रसदस्योरदा[क]दिति।
पञ्चाशतं वधूनाञ्च गवां तिस्रश्च सप्ततीः ॥५१॥
अश्वोष्ट्राणामुरभ्राणां वासांसि विविधानि च।
रत्नानि वृषभं श्यावं तासामग्रेसरं पतिम्[२] ॥५२॥
कृत्वा दारानृषिर्गच्छन्निन्द्रायैतच्छशंस ह।
वयं[ख] सूक्तेन शक्रश्च प्रीतस्तेन शचीपतिः ॥५३॥
रूपे वरं वृणीष्वेति शक्रस्तमृषिरब्रवीत्।
काकुत्स्थ कन्याः पञ्चाशद्युगपद्रमये प्रभो ॥५४॥
कामतो बहुरूपत्वं यौवनं[३] चाक्षयां रतिं।
शङ्खनिधिं पद्मनिधिं मद्गृहेष्वनपायिनम्[४] ॥५५॥
प्रासादान् विश्वकर्मासौ सौवर्णांस्त्वत्प्रसादतः।
करोतु पुष्पवाटीश्च पृथक्तासां सुरद्रुमैः ॥५६॥
मा भूत् सपत्नी स्पर्द्धायां सर्व्वमस्त्विति चाब्रवीत्[६]।

---

(१) वरुणार्य्यममित्रास्तु प्रगाथेयमिति ख॰ ङ॰।
(२) स्तुताः इति ख॰ ङ॰ पुस्तकान्तरञ्च, वदेवि ग॰।
(३) अग्रे भरं प्रवीति ख॰।
(४) युगपदिति ख॰।
(५) काकुत्स्थेत्यादिसार्द्धश्लोकः पुस्तकान्तरे न दृश्यते।
(६) पञ्चाशतं वधूनाश्चेत्यादि सर्व्वमस्त्विति चाब्रवीदित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेक्ष्यते।

---

(क) ऋ॰ ८, १८, ३६। (ख) ऋ॰ ८, २१, १।

आगन्त(क) मारुतं सूक्तं वय(ख)मित्यैन्द्रमुत्तरम्(१) ॥५७॥
काण्वस्य सौभरे(२)श्चैव यजतो वंशजैः(३) सह।
कुरुक्षेत्रे यज्ञान् जुहुर्हवींषि विविधानि च ॥५८॥
आखुस्त(४) सोऽभितुष्टाव इन्द्रश्चित्रं सरस्वतीं।
इन्द्रो वे(ग)त्यनयर्चा स दानशक्तिं प्रकाशयन् ॥५९॥
आखुराजोऽभिमानाच्च प्रहर्षितमनाः स्वयम्(५)।
स स्तुतो(६) देववच्चित्र(घ) ऋषये तु गवां ददौ(७) ॥६०॥
अयुतानां सहस्रं वै निर्जग्राह स्तुवन्नृषिः।
ऋषिश्चोवाच(८) हृष्टात्मा नाहमर्हाम्यृषेः स्तुतिम् ॥६१॥
तिर्यग्योनौ समुत्पन्नो(९) देवतां(१०) स्तोतुमर्हसि।

(१) वयमैन्द्रमतः परमिति ख० ङ० पुस्तकान्तरञ्च।
(२) सौभरेरिति क० ग० घ० च०।
(३) वङ्गजैरिति क० घ० च०।
(४) आखवः इति ख० ङ० पुस्तकान्तरञ्च।
(५) इन्द्रोवेत्यनयर्चा स इति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नालोक्यते।
(६) संस्तुत इति ख० ग० ङ० पुस्तकान्तरञ्च।
(७) यद्ददौ तद्वृचेन हेति ङ० पुस्तकान्तरञ्च।
(८) प्रोवाचेति ङ०।
(९) समुद्भूत इति ख० ङ० पुस्तकान्तरञ्च।
(१०) देवं नः इति ग०।

(क) ऋ० ८,२०,१। (ख) ऋ० ८,२१,१। (ग) ऋ० ८,२१,१७। (घ) ऋ० ८,२१,१८।

तमन्त्यया पुनश्चास्तौदीत्थं(क) सूक्तेन चाश्विनौ(१) ॥६२॥
इळि(ख)श्चेत्येतदाग्नेयं सखायश्चैन्द्रमुत्तरम्(२) ।
यथा वरः सुषाम्णे (ग)उत्तमस्तौषमस्तुवः ॥६३॥
अष्टौ तु षड्विता एता देवता विभिदुर्वलम् ।
उषाश्चेन्द्रश्च सोमश्चाथाग्निः सूर्यो बृहस्पतिः ॥६४॥
अङ्गिराः सरमा चैव ता वा(घ)मित्युत्तरस्य तु ।
आदौ मैत्रावरुण्यस्तु(३) नव द्वादश तूत्तराः ॥६५॥
वैश्वदेव्यो वरूराजा यथादादृक्षये वसु ।
इन्द्रो वेत्येतयर्चा तु दानश्रिमप्रकाशनम्(४) ॥६६॥
कीर्तितं(५) तु वृषे तस्मिन्नृक्ष(ङ)मुवश्यायने ।
अश्विनौ ददतुः प्रीतौ तदित्योक्तं सुषामणि(६)(च) ॥६७॥

---

(१) तुत्वा चित्रं सूक्तैः पदैश्चित्रमिति क॰ घ॰ च॰ ।

(२) उत्तममिति ङ॰ एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम् । तेषु अस्मिन् स्थले, अश्विनावमिमिन्द्रश्च चामितुष्टाव देवताः । एतच्छ्लोकार्द्धं वर्त्तते ।

(३) मित्रावरुण्य इति ख॰ ङ॰ ।

(४) एतच्छ्लोकार्द्धं ख॰ ग॰ ङ॰ चिह्नितपुस्तकेषु नापश्यव ।

(५) कीर्त्तनमिति ङ॰ पुस्तकान्तरच ।

(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ॰ ८, २२, १ । (ख) ऋ॰ ८, २३, १ । (ग) ऋ॰ ८, २४, २८ । (घ) ऋ॰ ८, २५, १ । (ङ) ८, २४, २२ । (च) ऋ॰ ८, २५, २२ ।

आश्विनं तु युवो(क)र्युंक्त(ख) वायव्या उत्तरास्तु याः।
यं सवर्णमनुर्नाम लेभे पुत्रं विवस्वतः ॥६८॥
वैश्वदेवानि पञ्चैतान्यग्निरुक्थे(ग) जगाद सः[1]।
बभ्रुरेक(घ) इति त्वस्मिंस्त्रिष्वतो[2] द्विपदा दश ॥६९॥
स्तूयन्ते देवता ह्यासु कर्मभिः[3] स्वैः पृथक् पृथक्।
स्तुताः कर्मगुणैः स्वैः स्वैर्देवता यत्र यत्र तु ॥७०॥
पृथक् कर्मस्तुतिर्नाम वैश्वदेवन्तदेव तु[4]।
तासाम्बभ्रुरिति त्वाद्या सौम्याग्नेयी त्वनुत्तरा ॥७१॥
त्वाष्ट्री चैन्द्री च रौद्री च पौष्णी वैष्णव्युगाश्विनी।
नवमी मैत्रावरुण्युन्द्यमी मित्रसंस्तवा ॥७२॥
न्यजमानप्रसङ्गाच्च यजिरेवाथ संस्तुता।
यो यजाति(ङ)दृचे शक्तो यजतां पतिरीडितः ॥७३॥
तस्य द्युमान्(च) दृचे यज्वा चतसृष्वपि मन्त्रि(छ)ति।

---

(१) वैश्वदेवानि सूक्तानि नारा[illegible] सर्वमिति क॰ च—च॰।
(२) त्रेता त्रिष्टुभ इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(३) ह्यासां नवभिरिति क॰ घ॰ च॰।
(४) पृथक् कर्मस्तुतेरुक्तं तद्विद्यादैश्वदेवतमिति ख॰ ङ॰ पुस्तकान्तरञ्च

---

(क) ऋ॰ ८, २६, १। (ख) ऋ॰ ८, २६, २०। (ग) ऋ॰ ८, २७, १। (घ) ऋ॰ ८, २९, १। (ङ) ऋ॰ ८, ३१, १। (च) ऋ॰ ८, ३१, ३। (छ) ऋ॰ ८, ३१, ५।

यज्वनोरेव दम्पत्योः पञ्च या(क) दम्पतीत्यृचः ॥७४॥
आयम्भां(ख)श्रौरैतु(ग) पौष्णौ परे मित्रार्य्यमा यथा(घ)।
वरुणश्च सुतस्तत्र आदित्या अग्नि(ङ)मग्नये(१) ॥७५॥
सूक्तानि प्रकृतानी(च)ति चौर्ण्यैन्द्राणि पराण्यतः।
अध(छ) इत्यच कन्या तं स्त्रीजिह्वेनेन्द्रमब्रवीत् ॥७६॥
स हि तां कामयामास दानवीं पाकशासनः।
व्येद्धां स्वसारं पुंसश्च(२) तस्यैव वधकाम्यया(३) ॥७७॥
अग्निने(ज)त्याश्विनं सूक्तमैन्द्रे सूक्ते परे ततः।
ऐन्द्राग्न्यात् परमाग्नेयमैन्द्राग्न्याद्वारुणे(४) परे ॥७८॥
उत्तरे वरुणे त्वम्य आ वा(झ)मित्याश्विनस्तृचः।
सूक्ते इमे(ञ) समाग्नेये(५) ताभ्यामैन्द्रे ततः परे(६) ॥७९॥

---

(१) येर यजाति इचे ग्रम इत्यादिसार्द्धश्लोकद्वयं ख॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु नास्त्यत्र।
(२) प्युसस्येति क॰ घ॰ च॰, वंससेति ख॰ पुस्तकान्तरञ्च।
(३) युवकाम्ययेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(४) येन्द्राग्नं परमाग्नेयमैन्द्राग्नं वारुणे इति क॰ घ॰ च॰। वारुणे इत्यत्र वारुणमिति ग॰।
(५) इमे तु घर्माग्नेये इति क॰ घ॰ च॰।
(६) ताभ्य मैन्द्रेति चोत्तरे इति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ ८, ३१, ५। (ख) ऋ॰ ८, ३१, १०। (ग) ऋ॰ ८, ३१, ११। (घ) ऋ॰ ८, ३१, १३। (ङ) ऋ॰ ८, ३१, १४। (च) ऋ॰ ८, ३२, १। (छ) ऋ॰ ८, ३३, १९। (ज) ऋ॰ ८, ३५, १। (झ) ऋ॰ ८, ४२, ४। (ञ) ऋ॰ ८, ४३, १।

बभ्रायाख्याय[१]यत्[२]प्रादात्कानीतस्तु पृथुश्रवाः ।
तदृच संस्तुतं दानमास[क] इत्येवमादिभिः[३] ॥८०॥
आनः[ख] प्रगाथो वायव्यः सूक्तशेषोपोत्तमा च या ।
मित्रार्य्यमणौ मरुतः सुनीथोथ[४]दृचे स्तुताः ॥८१॥
द्विचत्वारिंशकाक्रीत[ग] स्त्रिशोकाय पुरन्दरः ।
गिरिं भित्वा वज्रेण गा ददावसुरैर्हृताः ॥८२॥
यः[घ] कृन्तदिति चैतस्यामृषिस्तु स्वयमब्रवीत्[५] ।
स्तुता नवम्या लदितिर्मन्त्रो[ङ]त्यादित्यदेवते[६] ॥८३॥
अन्त्याः पञ्चोपवेऽपि वाः सौम्यं स्वादो[च]रिति श्रुतम् ।
पराण्यष्टौ तु[७] सूक्तानि ऋषीणां तिग्मतेजसाम् ॥८४॥

---

(१) बभ्रायाख्यायेति घ० ।
(२) बभ्राम्नाय यददिति ङ० ।
(३) चादिभिरिति ख० ङ० पुस्तकान्तरञ्च ।
(४) प्रातः इति ङ० पुस्तकान्तरञ्च ।
(५) मित्रार्य्यमणौ मरुतः इत्यादि ऋषिस्तु स्वयमब्रवीदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(६) चापीति क० घ० च० ।
(७) पराणि चाष्टाविति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ८, ४६, २१ । (ख) ऋ० ८, ४६, २५ । (ग) ऋ० ८, ४६, ४ । (घ) ऋ० ८, ४६, २७ । (ङ) ऋ० ८, ४७, १ । (च) ऋ० ८, ४८, १ ।

ऐन्द्राग्नमि(क) तु षड्विंशः प्रगाथो बह्वदेवतः।
ऋगन्त्याग्नेरचेत्य(ख)ग्निः सूर्य्यमन्त्यपदा(१) जगौ(२) ॥८५॥
प्रस्कण्वस्य पृषध्रस्य(३) प्रादाद्यद्वसु किञ्चन।
तद्धूरी(ग)दिति सूक्ताभ्यामखिलन्विह संस्तुतम्(४) ॥८६॥
ऐन्द्राग्नुभय(घ)मित्यृच षडाग्नेयात् पराणि तु(५)।
निपातमात्र(६) देवानां दाता म(७) इति भागुरिः ॥८७॥
तृचे(०)यास्कस्तृचन्वेतं(८) मन्यते वैश्वदेवतं।
आदित्यदैवतं सूक्तं त्याग्नि(च)त्यृच परन्तु यत् ॥८८॥
धीवराः सहसा मीनान् दृष्ट्वा सारस्वते जले।

---

(१) अन्त्यं पदमिति ङ० पुस्तकान्तरञ्च।
(२) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते। तेषु अस्मिन् स्थले, अन्त्येत्यग्निरिति तस्यास्ततोऽग्निः सूर्य्य एव तु। इति श्लोकार्द्धमस्ति।
(३) त्विति ङ०।
(४) प्रदिकीर्त्तितमिति ख० ङ० पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(६) निपातानादेति ख०, निपातेनेत्येति ङ० पुस्तकान्तरञ्च।
(७) ऋचमिति ग०।
(८) यास्कोऽस्मेऽद्वं तृचं चैनमिति ङ०।

---

(क) ऋ० ८, ३८, १। (ख) ऋ० ८, ५६, ५। (ग) ऋ० ८, ५५, १। (घ) ऋ० ८, ६१, १। (ङ) ऋ० ८, ६५, १०। (च) ऋ० ८, ६७, १।

जालं प्रचिप्य तान् बद्धोदचिपन् सलिलात् स्थलम् ॥८८॥
शरीरपातभीतास्ते तुष्टुवुश्चादितेः सुतान्।
मुमुचुस्तांस्ततस्ते च प्रसन्नास्तान् समूदिरे ॥९०॥
धीवराः क्षुद्ध्यं मा वो भूत्स्वर्गं प्राप्स्यथेति च[१]।
उते[क]ति माता चैवैषां ऋचेनाभिष्टुतादितिः ॥९१॥
मातृत्वाद्गर्भसम्बन्धात्[२] स्तुयेतैषां[२] स्तुतौ स्तुतौ।
ऐन्द्राग्न्या त्वा रथं[ख] चौणि सौत्यृद्धतुपमे[ग]ति यद् ॥९२॥
आर्चाश्वमेधयोश्च पञ्चदानस्तुतिः परा।
अपा[घ]दिन्द्रस्य चाग्नेय विशेषो चैव संस्तवः ॥९३॥
दूतस्य प्रथमोऽर्द्धर्चः शेषा वरुणदेवताः[४]।
त्व[ङ]माग्नेयेऽथ वा सूक्ते उत्तरे[५] ऋषिणां स्तुतिः॥९४॥
पयःपश्वोषधीनाञ्च[६] तथा रूपं हि दृश्यते।

---

(१) धीवराः सहसा मीनानित्यादि सार्द्धश्लोकद्वयं क० ग० घ० च चिह्नितपुस्तकेषु नास्त्यत।
(२) मातृत्वादर्गसम्बन्धादिति क० च०, मातृत्वादभिसम्बन्धादिति ग० मातृत्वादिति सम्बन्धादिति घ०।
(३) स्तवश्चेमामिति ख० ङ० पुस्तकान्तरस्य।
(४) शेषो वरुणदैवत इति ख० ग० ङ०।
(५) सूक्तमुत्तरमिति क० ग० घ० च०।
(६) चेति ख० ङ०।

---

(क) ऋ० ८, ६७, १०। (ख) ऋ० ८, ६८, १। (ग) ऋ० ८, ६८, १४। (घ) ऋ० ८, ६९, ११। (ङ) ऋ० ८, ७१, १।

उ[क]दित्याश्विनमाग्नेये परे सूक्ते विमो विप्रः[ख] ॥९५॥
अभ्यासद[ग]मिति द्वाभ्यां स्तौत्यात्मानमृषिः स्वयम् ।
आत्मानमात्मना स्तुत्वा स्तौति दानं श्रुतर्व्वणः ॥९६॥
आत्मादानाभिसम्बन्धात् परुष्णीञ्च महानदीम्[१] ।
परुष्णीं परया चेन्द्रं[२] त्रिभिः सूक्तैरिम[घ]ञ्चिति ॥९७॥
सौम्यस्य लघ[ङ]मित्यस्य पराण्यैन्द्राणि यानि तु ।
नह्री[च]ति तेषां प्रथमं[३] वैश्वदेव्यृगवीवृधत्[छ] ॥९८॥
देवाना[ज]मिति देवानामग्नेऽ[झ]माग्नेयमुत्तरम्[४] ।
त्रीण्याश्विनानि सूक्तानि आ मे[ञ]ऐन्द्राणि तं[ट] तथा[५] ॥९९॥
अपालाऽत्रिसुता त्वासीत्कन्या त्वग्दोषिणी पुरा ।
तामिन्द्रस्त्वकने दृष्ट्वा[६] विजने पितुराश्रमे ॥१००॥

---

(१) आत्मानमात्मना स्तुत्वेत्यादि परुष्णीञ्च महानदीमित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितः ।
(२) परया परुष्णीमिन्द्रमिति क॰ ग॰ घ॰ च॰ ।
(३) प्रथममिति ङ॰ पुस्तकान्तरञ्च ।
(४) आग्नेयन्तु ततः परमिति क॰ घ॰ च॰ ।
(५) आम इति ऐन्द्राणि तमित्यौति चेति क॰ ग॰ घ॰ च॰ ।
(६) दृष्ट्वेति क॰ घ॰ च॰ ।

---

(क) ऋ॰ ८, ७३, १ । (ख) ऋ॰ ८, ७४, १ । (ग) ऋ॰ ८, ७४, १३ । (घ) ऋ॰ ८, ७६, १ । (ङ) ऋ॰ ८, ७९, १ । (च) ऋ॰ ८, ८०, १ । (छ) ऋ॰ ८, ८०, १० । (ज) ऋ॰ ८, ८३, १ । (झ) ऋ॰ ८, ८४, १ । (ञ) ऋ॰ ८, ८५, १ । (ट) ऋ॰ ८, ८८, १ ।

तपसा बुबुधे सा तु सर्वमिन्द्रचिकीर्षितम् ।
उदकुम्भं समादाय अपामर्थे जगाम सा[१] ॥१०१॥
दृष्टा सोममपारास्ये तुष्टावर्चा वने तु तं ।
कन्या वार् इति चेत
यथैषोऽर्थः कथितः स्तुतः[२] ॥१०२॥
सा सुषाव मुखात् सोमं सुतन्द्र... पपाव तं[५] ।
असौ य एषी[क]त्यनया पपाविन्द्रस्तु तन्मुखात्[३] ॥१०३॥
अपूपांश्चैव सक्तूंश्च भक्षयित्वा तु तद्गृहात्[४] ।
अभिष्टुष्टाव सा चैनं जगादेनं दृचेन तु[६] ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचां ।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दरः[७] ॥१०५॥
रथच्छिद्रेण तामिन्द्रः शकटस्य युगस्य च ।

---

(१) क० ग० घ० च० चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धे, अपूपांश्चैव सक्तूंश्चेति श्लोकार्द्धात्परतः पठितम् ।
(२) दृष्टासोममपारास्ये इत्यादि यथोऽर्थं कथितः स्तुतः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तके नोपलभ्यते ।
(३) पपाविन्द्रस्तु तन्मुखादिति क० ग० घ० च० ।
(४) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) प्रतमनुरिति ख० ङ० पुस्तकान्तरयोः ।
(६) असौ सूते दृचेन सेति ङ० पुस्तकान्तरयोः ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० ८, ९१, १ । (ख) ऋ० ८, ९१, २ ।

प्रक्षिप्य निश्चकर्ष त्विः सुलक् सा तु ततोऽभवत्[१] ॥१०६॥
तस्यां त्वचि व्यपेतायां पूर्व्वस्यां प्रस्तको[२]ऽभवत्।
उत्तरा त्वभवद्गोधा कृकलासस्त्वगुत्तमा ॥१०७॥
इतिहासमिमं[३] सूक्तं त्वाहतुर्यास्कमाठरौ[४]।
कन्ये[क]ति शौनकः सूक्ते पान्त[ख]मैन्द्रे ततः परे[५] ॥१०८॥
उत्तमा चार्भवी प्रोक्ता उत्तरस्यैतरेयके।
छान्दोगिके तृतीये तदार्भवं शस्यते यतः[६] ॥१०९॥
मारुतं गौः[ग] परं सूक्तमा त्वै[घ]न्द्राणि[७] पराणि षट्।
सूक्ते द्वितीय एतेषामितिहासं प्रचक्षते[८] ॥११०॥

---

(१) ततः सा सुलघाभवदिति ङ० पुस्तकान्तरञ्च।
(२) तस्यास्त्वगपहृतायाः पूर्व्वा सा शल्यक इति क० ग० घ० च०।
(३) इदमिति क० ग० घ० च०।
(४) यास्कभागुरिरिति क० ग० घ० च० यास्कगालवाविति ङ० पुस्तकान्तरञ्च।
(५) शौनकस्त्वैन्द्रं यान्तमित्युत्तरे च ये इति क०।
(६) उत्तमा चार्भवीत्यादिश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत।
(७) श्चात्वैन्द्राग्नीति क० ग० घ० च०।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते।

---

(क) ऋ० ८, ९१, १। (ख) ऋ० ८, ९२, १। (ग) ऋ० ८, ९४, १। (घ) ऋ० ८, ९५, १।

अपक्रम्य तु[१] देवेभ्यः सोमो वृत्रभयार्दितः।
नदीमंशुमतीनामाभ्यतिष्ठत् कुरून्[२] प्रति ॥११११॥
तं बृहस्पतिरेकेन अभ्यपा[३]द्वृत्रहा सह।
योत्स्यमानः सुसंहृष्टै[४]र्मरुद्भिर्विविधायुधैः ॥११२॥
दृष्ट्वा तानायतः सोमः स्वबलेन व्यवस्थितः।
मन्वानो वृत्रमायान्तं[५] जिघांसुमरिसेनया ॥११३॥
व्यवस्थितं धनुष्मन्तं तमुवाच बृहस्पतिः।
मरुत्पतिरयं सोम एहि[६] देवान्[७] पुनर्विभो ॥११४॥
श्रुत्वा देवगुरोर्वाक्यमनर्थं वृत्रशङ्कया[८]।
सोऽब्रवीत्येति तं शक्र ओजश्चैव[९] बलाहृतो ॥११५॥

---

(१) अपचक्रामेति ख॰ ङ॰ पुस्तकान्तरच।
(२) अंशुमती नामा व्यवतिष्ठत्कुरूनिति क॰ ग॰ घ॰ च॰, अभ्यतिष्ठत् कुरूनिति ख॰ ङ॰।
(३) अभ्ययादिति पाठः साधुः। अभ्यायादिति ङ॰ पुस्तकान्तरच।
(४) योत्स्यमानश्च संहृष्टैरिति क॰ घ॰ च॰।
(५) दृष्ट्वा तमायान्तं सोमं स्वबलेन व्यवस्थितम्। मन्वानं वृत्रमाया मिति क॰ घ॰ च॰।
(६) मरुत्पतिरयं सोममेहीति क॰ ग॰ घ॰ च॰।
(७) देवेति पाठः समीचीनः।
(८) श्लोकार्द्धमेतत् क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(९) स्वर्ग एवेति क॰ घ॰ च॰।

द्‌याय देवानायन्तं(१) तं पपुर्विधिवत्सुराः।
जघ्नुः पीत्वा च दैत्यानां समरे(२) नवतीर्नव ॥११६॥
तदेतद्‌यवद्रप्स(३)(क)सूचे सर्वं निगद्यते।
तृचस्य देवता तस्य(४) इन्द्रमेवाह शौनकः ॥११७॥
ऐन्द्रावार्हस्पत्य उक्ता ब्राह्मणे त्वैतरेयके(५)।
तृचेनेन्द्रमपश्यन् तं (६)नेमोऽय(ख)मिति भार्गवः ॥११८॥
तुष्टावेन्द्रो तृचेनाय(ग)महं पश्य च मास्तवे।
स हि स्तुवन्नेव एको नेन्द्रा(७) अस्तीति चाब्रवीत् ॥११९॥
तदाकर्ण्येन्द्र आत्मानमृग्भ्यां तुष्टाव दर्शयन्(८)।

(१) यादायेति क० ग० घ० च०।
(२) इतरा इति क० घ० च०।
(३) तदेतदपि यतस्मिन्निति क० ग० च०।
(४) देवता स्तोता इति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(६) चदृश्यन्तमिति क० घ० च०, ऐन्द्रमपश्यन् तमिति ङ० पुस्तकान्तरञ्च।
(७) इन्द्रः इति पाठः साधुः।
(८) स हि स्तुवन्नेव एका इत्यादि ऋग्भ्यां तुष्टाव दर्शयन्नित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।

(क) ऋ० ८, ९६, १३। (ख) ऋ० ८, १००, ३। (ग) ऋ० ८, १००, ४।

ऋषिस्तु दृष्ट्वा[1] सुप्रीतो विश्वेत्तात[क] इति तृचे ॥१२०॥
विविधानि च कर्म्माणि दानमैन्द्रस्य शंसति ।
मनोजवा[ख]स्तु सौपर्णौ[2] समुद्रे[ग] वज्रसंस्तवः ॥१२१॥
वाचं सर्व्वगतां देवीं[घ] स्तौति यदा[ङ]गिति तृचे ।
द्यौर्लोकानभितप्येमान्[3] वृषस्तस्यौ स्वयं त्विषा ॥१२२॥
तं नाभकं हन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत् ।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य[4] ममान्तिके ॥१२३॥
उद्यतस्य तु[5] वज्रस्य द्यौर्द्ददात्[6] ममान्तरम् ।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरन्ददौ ॥१२४॥
तदेतदखिलं प्रोक्तं विष्णाविति सखे[च]त्यृचि[7] ।

(१) तं दृष्ट्वैवेति ख० ङ० पुस्तकान्तरञ्च ।
(२) सौवर्णाविति ख० ङ० ।
(३) अभितप्येमानिति ख० ङ० पुस्तकान्तरञ्च ।
(४) वृत्रं हनाव विक्रम्य तिष्ठस्वाद्येति ख० ङ० पुस्तकान्तरञ्च।
(५) उद्यतस्यैवेति क० ग० घ० ।
(६) ददात्विति क० ग० घ० ।
(७) सर्व्वमपिप्रोक्तं सखेत्यृचीति क० ग० घ० च० ।

(क) ऋ० ८, १००, ६ । (ख) ऋ० ८, १००, ८ । (ग) ऋ० ८, १००, ९ । (घ) ऋ० ८, १००, ११ । (ङ) ऋ ८, १००, १० । (च) ऋ० ८, १००, १२ ।

मैत्रावरुण्यः सूक्ताद्यास्तिस्रस्तूध(क)गित्यृचः ॥२२५॥
प्रे(ख)ति मित्राय वा पादाश्चार्य्यम्णो(१) वरुणस्य च ।
नय(ग)श्चतुर्थः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या(२) आम(घ) इत्याश्विनो तृचः(३) ।
वायव्ये चोत्तरे सौर्य्ये औषसी त्वृगियं(ङ) परा(४) ॥१२७॥
पावमानी प्रजा ह्ये(च)ति माते(छ)त्यृग्भ्यान्तु गौः स्तुता ।
त्वमग्ने बृह(ज)दाग्नेये परेऽग्निस्तृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रैश्च आग्ने याही(झ)ति मध्यमः ।
प्रजा ह्ये(ञ)त्यपि वार्द्धर्चे प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः ।

---

(१) मित्राय पादश्चार्य्यम्णः इति क० ख० ग० घ० ।
(२) ऋच आदित्यदेवत्या इति ङ० पुस्तकान्तरञ्च ।
(३) द्व्यृचः इति ग० ।
(४) सौर्य्यं औषस्या प्रभां वा चन्द्रसूर्य्ययोरिति ख० ङ० पुस्तकान्तरञ्च ।
औषस्या इत्यत्र उषसेति ग० ।

---

(क) ऋ० ८, १०१, १ । (ख) ऋ० ८, १०१, ५ । (ग) ऋ० ८, १०१, ४ । (घ) ऋ० ८, १०१, ७ । (ङ) ऋ० ८, १०१, १३ । (च) ऋ० ८, १०१, १४ । (छ) ऋ० ८, १०१, १५ । (ज) ऋ० ८, १०२, १ । (झ) ऋ० ८, १०२, १४ । (ञ) ऋ० ८, १०२, १४ ।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[१] ॥१२०॥
पावमानः स्तुतः सोमो नवमे त्विह मण्डले[२] ।
पवमानवदाग्नेयस्तु[३] समिद्ध (क)इति संस्तुतः ॥१२१॥
अग्न आयूंषी(ख)ति चास्य तिसृष्वग्निर्निपातभाक् ।
अविता न(ग) इति त्वस्मिंस्तृचे पूषा[४] सह स्तुतः ॥१२२॥
आग्नेय्यौ द्वे त्वृचावत्र यत्ते (घ)इत्युत्तरे ततः ।
उभाभ्या(ङ)मिति सावित्री अग्निसावित्र्य[५]गुत्तरा ॥१२३॥
पुनन्तु मां(च) वैश्वदेवी चाग्नेयी त्वृगुपान्त्यम्(छ) ।
षडुत्तरा[६] य(ज) इत्यृच[७] स्वाध्यायाध्येतृसंस्तवः ॥१२४॥

---

(१) प्रजा ह्येत्यपि वार्द्धके इत्यादिसार्द्धश्लोकः क॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु न विद्यते ।
(२) नवमे मण्डलेऽर्चिभिरिति क॰ घ॰ च॰, मण्डलर्चिभिरिति ग॰ ।
(३) पवमानवदाग्नेय इति ख॰ ।
(४) पूषेति ख॰ ग॰ पुस्तकान्तरञ्च ।
(५) चाग्न्यासावित्रीति ख॰ ।
(६) षडोत्तराः इति ख॰ ग॰ पुस्तकान्तरञ्च ।
(७) उत्तरे च य इत्येतीति ग॰ ।

---

(क) ऋ॰ ९, ५, १ । (ख) ऋ॰ ९, ६६, १९ । (ग) ऋ॰ ९,६७,२० ।
(घ) ऋ॰ ९, ६७, २३ । (ङ) ऋ॰ ९, ६७, २५ । (च) ऋ॰ ९, ६७, २७ ।
(छ) ऋ॰ ९, ६७, २९ । (ज) ऋ॰ ९, ६७, ३१ ।

सूक्ते निरुक्ते स्वर्के[क]ऽग्नि रक्षोहा घर्मसंस्तवः[१]।
सूर्य्यवर्चात्मवर्चाच[२] पवित्र[ख]मिति चोच्यते ॥१२५॥
आर्भवस्तु भवेत्पाद ऋभुर्धीर[ग] इति स्मृतः।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः[३] ॥१२६॥
मध्या देवानां तिस्रोकास्त्रिभिस्त्वेतैर्हृचैस्तृचैः[४]।
सूर्य्यवर्चात्मवर्चाय[५] स्तूयते सोम[घ] इत्यपि[६] ॥१२७॥
अनादृत्यां तु वर्त्तन्यां पप्रच्छर्षीञ्छचीपतिः।
काले दुर्गे महत्यस्मिन् कर्मणा न जीवथ ॥१२८॥
शकटं शाकिनी गावः छपिरस्यन्दनं वनं[७]।
समुद्रः पर्व्वतो राजा एवं जीवामहे वयम् ॥१२९॥
अथ स्तुवन्[८] शशंसास्मै ऋषिराङ्गिरसः शिशुः।

---

(१) एतच्छ्लोकार्द्धं ङ० चिह्नितपुस्तके न पठितम्।
(२) सूर्य्यवर्चात्मवर्चापीति क० घ० च०।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(४) तृचादृचैरिति क० ग० घ० च०।
(५) सूर्य्यवर्चात्मवर्चापीति क० घ० च०।
(६) एव वेति क० ग० घ० च०।
(७) ऋतस्य नन्दनन्दनमिति ख०। एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापठ्यत।
(८) स्तुवन्नेवेति क० ग० घ० च०।

---

(क) ऋ० ९, ७३, १। (ख) ऋ० ९, ८३, १। (ग) ऋ० ९, ८०, ३। (घ) ऋ० ९, १०७, ७।

सोऽस्य वज्रेण तान्याशु(१) शिरांसि त्रीण्यथाच्छिनत्(२) ॥१५१॥
तस्य यत्सोमपानन्तु मुखं सोऽभूत् कपिञ्जलः।
कलविङ्कः सुरापानमन्नादं तित्तिरि(३)स्त्वभूत् ॥१५२॥
तं वागभ्यवदद्ब्राह्मी(४) ब्रह्महासि शतक्रतो।
अपत्यं हतवान् यस्माद्(५) विश्वरूप पराङ्मुखम् ॥१५३॥
तमभ्यषिञ्चत् सूक्तेन ऋषि(६)राप(क) इति स्वयम्।
सिन्धुद्वीपोपनुत्यर्थं तस्याघौघस्य पाप्मनः ॥१५४॥
मैथुनार्थमभीप्सन्तीं प्रत्याचष्टे यमीं यमः।
ओचित् सखाय(ख)(७) संवादे(८) विवस्वत्सु तयोस्तयोः ॥१५५॥
वृषा(ग)ग्नेये हविर्धाने युजे वा(घ)मप(९) संस्तुते।
परेयिवांस(ङ)मित्यत्र स्तूयते मध्यमो यमः(१०) ॥१५६॥

---

(१) सोऽस्य वज्रेण तस्यास्तु इति क० घ० च०।
(२) तान्याशु शिरांसि त्रीण्यथाच्छिनदिति ग०। शिरांस्येवाच्छिनत् प्रभु इति ख० पुस्तकान्तरञ्च।
(३) तित्तिरः इति ख० ङ० पुस्तकान्तरञ्च।
(४) तौम्रिति क० घ० च०।
(५) यस्त्वमिति क० घ० च०।
(६) ऋषिरिति क० ग० घ० च०।
(७) सदोचिदितीति क० ग० घ० च०।
(८) सवादे इति क० घ० च०।
(९) युजत्येतेनेति क० ग० घ० च०।
(१०) इत्येवमिनम् स्तूयन्ते युमस्तयः इति क० घ० च०।

---

(क) ऋ० १०, ९, १। (ख) ऋ० १०, १०, १। (ग) ऋ० १०, ११, (घ) ऋ० १०, १३, १। (ङ) ऋ० १०, १४, १।

अथर्वाणोऽथ भृगवः पितरोऽङ्गिरस[क]श्च ह ।
षष्ठ्यां देवगणास्तत्र संस्तूयन्ते द्युभक्तयः ॥१५७॥
पितृभिश्चाङ्गिरोभिश्च संस्तुतो दृश्यते यमः ।
मन्त्रेषु वञ्च्याः पादे विवस्वन्तं पिता हि सः ॥१५८॥
संस्कार्य्यप्रेतसंयुक्तैः पितृभिः स्तूयते यमः ।
प्रेहि प्रेही[ख]ति निसृषु प्रेतार्थीय उदाहृताः ॥१५९॥
पितृणां हि पति र्देवो यमस्तस्मात् स सूक्तभाक्[1] ।
अतिद्रव[ग]त्वृचे श्वानौ परं पित्र्यमुदीरितम्[2] ॥१६०॥
परेयिव[3] तु सूक्तेन श्मशाने कर्म शंसति[4] ।
पितृदेवासुराणाञ्च अभवन्नग्नयस्त्रयः ॥१६१॥
हव्यकव्यवहौ चोभौ सह रक्षस्विना सह[5] ।
तत्र मैन[घ]मिति त्वेतत्कव्यवाहनसंस्तुतिः[6] ॥१६२॥

(१) अथर्वाणोऽथ भृगवः इत्यादिसार्द्धश्लोकत्रयं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(२) उदीरितामिति क० ग० घ० च० ।
(३) उत्तरेणेति ग० ।
(४) एतच्छ्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न पठितम् ।
(५) सहरक्षा च नामतः इति ख० ङ० पुस्तकान्तरञ्च ।
(६) त्वाहु कव्यवाहनमेवचेति ख० ङ० पुस्तकान्तरञ्च ।

(क) ऋ० १०, १४, ६ । (ख) ऋ० १०, १४, ७ । (ग) ऋ० १०, १४, १० ।
(घ) ऋ० १०, १६, १ ।

इतराणि तु देवस्य[१] श्रुतिर्नासासुरस्य च[२]।
अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह[३] ॥१६२॥
स वै सरण्यूं प्रायच्छत् स्वयमेव विवस्वते।
ततः सरण्व्यां[४] जज्ञाते यमयम्यौ विवस्वतः।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यान्तु वै यमः ॥१६३॥

इति बृहद्देवतायां षष्ठोऽध्यायः ॥६॥

---

(१) दैवस्येति ग०, दैत्यस्येति ख०।
(२) त्विति ख० ङ० पुस्तकान्तरेषु।
(३) सदृशी च हेति क० ग० घ०।
(४) सरण्वा इति ख० ङ० पुस्तकान्तरेषु।

## अथ सप्तमोऽध्यायः ।



सृष्ट्वा[१] भर्तुः परोचन्तु सरण्यूः सवर्णां स्त्रियम् ।
निक्षिप्य मिथुनं[२] तस्यामश्वा भूत्वापचक्रमे[३] ॥ १ ॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत् सोऽपि[४] विवस्वानिव तेजसा ॥ २ ॥
स विज्ञाय[५] त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वाश्वलक्षणः[६] ॥ ३ ॥
सरण्यूश्च[७] विवस्वन्तं विदित्वा[८] हयरूपिणम्[९] ।

---

(१) दृष्ट्वेति क॰ ग॰ घ॰ ।
(२) मैथुनमिति पाठः साधुः ।
(३) अश्वो भूत्वोपचक्रमे इति क॰ ग॰ घ॰ ।
(४) राजर्षिरासीत् स मनुरिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(५) विज्ञाप्येति ग॰ ।
(६) सलक्षणः इति क॰ ग॰ घ॰, स्वलक्षणः इति ग॰ ।
(७) तमिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(८) विज्ञायेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(९) हरिरूपिणमिति पुस्तकान्तरम् ।

मैथुनायोपचक्राम[1] तां च तत्राहरोह सः ॥४॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि ।
उपाजिघ्रच्च[2] सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥५॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः ।
नासत्यश्चैव दस्रश्च यौ स्तुतावश्विनाविति[3] ॥६॥
इतिहासमिमं यास्कः सरण्यूदेवते ऋचे[4] ।
विवक्षतश्च त्वष्टुश्च त्वष्टे[क]ति सह मन्यते ॥७॥
पूषे[ख]ति पादौ पौष्णौ द्वौ त्वाग्नेया[5]वुत्तरौ तु यौ ।
स्यात्तृतीयोऽपि वा पौष्णस्त्रिकस्यान्त्यः परास्तु याः[6] ॥८॥
अपां स्तुतिस्तृगेवैका[7] तृचाश्चारस्वतात्परा ।
स्तुतः परोक्षः सोमस्तु द्रप्स[ग] इत्युत्तरे ऋचे ॥९॥
अब्देवताशीर्वादो[8] वा पयस्वत्यु[घ]त्तरा तु या ।

(१) मिथुनायोपचक्रामेति ख० ङ० पुस्तकान्तरञ्च ।
(२) उपाजिघ्रतीति क० ग० घ० ।
(३) यौ तु तौ वाजिनाविवीति क० ग० घ० ।
(४) ऋचाविति क० ग० घ०, तृचे इति ङ० पुस्तकान्तरञ्च ।
(५) त्वावाग्नेयाविति ङ० पुस्तकान्तरञ्च ।
(६) पौष्णस्त्वपरस्तृच इति ख० ङ० पुस्तकान्तरञ्च ।
(७) अपां स्तुति स्तुतिस्त्वेकेति ख०, अपां स्तुतिस्तुतस्त्वैकेति ङ० पुस्तकान्तरञ्च ।
(८) अब्देवत्याशीर्वाद इति ख० ङ०, पुस्तकान्तरञ्च ।

(क) ऋ० १०, १७, १ (ख) ऋ० १०, १७, ३ (ग) ऋ० १०, १७, ११ ।
(घ) ऋ० १०, १७, १४ ।

चतस्रस्ताः स्तुतिर्मृत्यो(क)रन्ते क्रियास्व(१) कर्मणि ॥१०॥
मृतमिष्टेभ्य आभास्त इमे(ख) ज्योग्जीवनं पुनः।
इमं जीवेभ्य(ग) आभास्ते तेभ्यः परिधिकर्मणि(२) ॥११॥
यथा(घ) धाञ्युत्तरा लाङ्गी ततो याम्या इमा(ङ)स्त्विति(३)।
स्त्रीणामाग्निषमाभास्ते तथैवाञ्जनकर्मणि(४) ॥१२॥
उदीर्ष्व नारीत्यनया मृत(च)पत्नी तु रोहती(५)।
भ्राता कनीयान् प्रेतस्य निगदात्(६) प्रतिषेधति ॥१३॥
कुर्य्यादेतत् कर्म होता देवरो न भवेद्यदि।
प्रेतानुगमनं न स्यादिति ब्राह्मणशासनात् ॥१४॥
वर्णानामितरेषाञ्च स्त्रीधर्मोऽयं भवेन्न वा(७)।
शान्त्यर्थं धनुरादाने प्रेतस्यैव धनु(छ)र्जपेत्(८) ॥१५॥

---

(१) त्विति ङ०।
(२) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) यथधाञ्युत्तरलाङ्गी ततो याम्या इमात्विनीति ख० ङ० पुस्तकान्तरञ्च।
(४) तथा परिधिकर्म्मणीति क० ग० घ० च०।
(५) मृतं पत्न्यनुरोहतीति पाठः साधुः। मृतमन्वारोहतीति क० घ० च०।
(६) निगतेति क० घ० च०, निगत्वेति ग०।
(७) कुर्य्यादेतत् कर्म्म होतेति सार्द्धैकश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नास्त्येव।
(८) शान्त्यर्थं च जपत्यस्या, धनुरित्युत्तरामृचमिति क० ग० घ० च०।

---

(क) ऋ० १०, १८, २। (ख) ऋ० १०, १८, ३। (ग) ऋ० १०, १८, ४।
(घ) ऋ० १०, १८, ५। (ङ) ऋ० १०, १८, ७। (च) ऋ० १०, १८, ८।
(छ) ऋ० १०, १८, ९।

यस्माद्देताः प्रयुज्यन्ते श्मशाने चान्यकर्म्मणि[१] ।
तस्माददेत्तृचस्या[२]स्य देवतां मृत्युरेव[३] तु ॥१६॥
मन्त्रेषु ह्यनिरुक्तेषु देवतां कर्म्मतो वदेत् ।
मन्त्रतः कर्म्मतश्चैव प्रजापतिरसम्भवे[४] ॥१७॥
परायतस्तो यास्त्वच उपसर्प[क]ति पार्थिवी ।
तासां प्रयोगः प्रेतस्य अस्थिसञ्चयकर्म्मणि ॥१८॥
प्रतीचीने[ख]यथाहानि अपश्यत्येतराणि तु[५] ।
अहःसु[६] पितरो दधुरित्याग्रास्ते[७]ऽन्ययाशिषः[८] ॥१९॥
अहःस्वागामिषु च मां द्रयतः[९] समजीवयम्[१०] ।
निवर्त्तध्व[ग]मिदं सूक्तं[११] गवां केचिदपां विदुः ॥२०॥
अर्द्धर्चः प्रथमायास्तु[१२] अग्नीषोमीय उत्तरः ।

---

(१) एते प्रयुज्यन्ते श्मशानेष्वन्यकर्म्मस्विति क॰ ग॰ घ॰ च॰ ।
(२) तृचस्तेमि क॰ ग॰ घ॰ च॰ ।
(३) मृत्युमेवेति पाठः समीचीनः।
(४) इदं प्रगाविति क॰ घ॰ च॰ ।
(५) प्रतीचीनमृचं स्वेतामपलभ्योत्तरासु तत् इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) अश्वस्विति ख॰ ङ॰ पुस्तकान्तरञ्च।
(७) दधुरभ्याग्रास्ते इति क॰ घ॰ च॰ ।
(८) दधुरभ्याग्रास्ते समाशिषः इति ग॰ ।
(९) प्रयतः इति ख॰ ।
(१०) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।
(११) इतीदन्त्विति क॰ ग॰ घ॰ च॰ ।
(१२) चेति ख॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋट॰ १०, १८, १० । (ख) ऋट॰ १०, १८,१४ ॥ (ग) ऋट॰ १०,१९,१ ।

| | | |
|---|---|---|
| P ngala Chhandah Sutra (Sans ) Fasc II—III @ /6/ each | Rs 0 | 1 |
| Pi thiraj Rasau (Sans ) Part I Fasc I Part II Fasc I—V @ /6/ each | 2 | 4 |
| D tto (English) Part II Fasc I | | 12 |
| Prákr ta Lakshanam (Sans ) Fasc I | 1 | 8 |
| Parasara Smriti (Sans ) Vol. I Fasc 1—8 Vol II Fasc 1—3 @ /6 each | 4 | 2 |
| Parasara, Inst tutes of (Engl sh) | 0 | 12 |
| Sra ta Sutra of Apastamba (Sans ) Fasc I—XII @ /6/ each | 4 | 8 |
| D tto As alayana, (Sans ) Fasc I—XI @ /6/ each | 4 | 2 |
| D tto Latyayana (Sans) Fasc I—IX @ /6/ each | 3 | 6 |
| D tto Sa khayana (Sans) Vol I Fasc 1—7 Vol II Fasc 1—2 @ /6/ each | 3 | 6 |
| Sama Veda Samhitá (Sans ) Vols I Fasc 3—10 II 1—6 III 1—7 IV 1—6 V, 1—8 @ /6 each Fasc | 13 | 2 |
| Samkhya Sutra Vr tt (Sans ) Fasc I—IV @ /6/ each | 1 | 8 |
| Sah tya Darpana, (Engl sh) Fasc I—IV @ /6/ each | 1 | 8 |
| Sankhya Aphorisms of Kap la (Engl sh) Fasc I and II @ /6 each | 0 | 12 |
| Sarva Darsana Sangraha, (Sans ) Fasc II | 0 | 6 |
| Sankara V jaya (Sans ) Fasc II and III @ /6/ each | 0 | 12 |
| Sankhya Pr vachana Bhashya, Fasc III (English preface only) | 0 | 6 |
| S ri Bhashyam (Sans ) Fasc I—II @ /6/ each | 0 | 12 |
| Susruta Samh ta, (Eng ) Fasc. I and II @ /12 each | 1 | 8 |
| Ta tt r ya Aranya ( ans) Fasc I—XI @ /6 each | 4 | 2 |
| D tto Brahmana (Sans ) Fasc I—XXIV @ /6 each | 9 | 0 |
| D tto Samh ta, (Sans ) Fasc IX—XXXV @ /6 each | 10 | 2 |
| D tto Prat sakhya, (Sans ) Fasc I—III @ 6 each | 1 | 2 |
| D tto and A tareya Upan shads (Sans ) Fasc II and III @ 6 each | 0 | 12 |
| Tandya Brahmana (Sans ) Fasc I—XIX @ 6 each | 7 | 2 |
| Tattva Ch nta mani, Vol I Fasc 1—9 Vol II 1—5 (Sans ) @ /6 each | 5 | 4 |
| Tul a Sat sa (S ns ) Fasc I—III @ /6 each | 1 | 2 |
| Uttara Na shadha, (Sans ) Fasc III V—XII @ 6 each | 3 | 6 |
| Uvasagadasao (Sans ) Fasc I—VI @ /12/ | 4 | 8 |
| Varáha Purana (Sans ) Fasc I—XIII @ /6/ each | 4 | 4 |
| Vayu Purana (Sans) Vol I Fasc I—VI Vol II Fasc I—VII @ 6 each Fasc | 4 | 14 |
| Vishnu Smr ti (Sans ) Fasc I—II @ 6 each | 0 | 12 |
| Vivadaratnakara (Sans ) Fasc I—VII @ /6 each | 2 | 10 |
| Vrihannarad ya Purana (Sans) Fasc I—V @ 6 | 1 | 14 |
| Yoga Sutra of Patanjali, (Sans & English) Fasc I—V @ 14 each | 4 | 6 |
| *Tibetan Series* | | |
| Sher Phyin—Fasc I—V @ 1/ each | 5 | 0 |
| Rtogs brjod dpag bsam Khri S ñ (T betan & Sans ) Fasc I—II @ 1/ | 2 | 0 |
| *Arabic and Persian Series* | | |
| Alamgirnamah w th Index (Text) Fasc I—XIII @ 6 each | 4 | 14 |
| Ain i Akbari (Text) Fasc I—XXII @ 1/ each | 22 | 0 |
| D tto (English) Vol I (Fasc I—VII) | 12 | 4 |
| Akbarnámah with Index, (Text) Fasc I—XXXVII @ 1/ each | 37 | 0 |
| Bad hshnamah w th Index, (Text) Fasc I—XIX @ 6/ each | 7 | 2 |
| Beale s Oriental B ograph cal D ct onary pp 291 4to th n p per | 4 | 8 |
| Catalogue of Pers an books and MSS in the l brary of A S B Fasc I | 1 | 0 |
| Dictionary of Arab c Technical Terms, and Append x Fasc I—XXI @ 1/ each | 21 | 0 |
| Farhang i Rash di (Text) Fasc. I—XIV @ 1/ each | 14 | 0 |
| F hrist Tusi, or Tusy s list of Shy ah Boo s, (Text) Fas I—IV @ /12/ each | 3 | 0 |
| Futuh ul Sham Waq di, (Text) Fasc. I—IX @ /6/ each | 3 | 6 |
| D tto Azadi, (Text) Fasc I—IV @ /6 each | 1 | 8 |
| Haft Asman, H story of the Pers an Masnawi (Text) Fasc. I | 0 | 12 |
| H story of the Cal phs, (English) Fas I—VI @ /12/ each | 4 | 8 |
| Iqbalnamah i Jahang ri, (Text) Fas. I—III @ /6/ each | 1 | 2 |
| Isabah, w th Supplement, (Text) 51 Fas @ /12/ each | 38 | 4 |
| Maas r ul Umara, Vol I, Fasc 1—9 Vol II 1—9 Vol III 1—3 @ /6/ each | 7 | 14 |
| M ghazi of Waq di, (Text Fasc. I—V @ 6 each | 1 | 14 |

# BIBLIOTHECA INDICA,

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 791



# बृहद्देवता ।

# BRIHADDEVATÁ

## AN INDEX TO THE GODS OF THE RIG VEDA,

BY

SAUNAKA ACHARYA.

EDITED BY

RAJENDRALALA MITRA, C. I. E., LL. D.

FASCICULUS III

---

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY [redacted] PARK STREET

1891.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

No. 57, PARK STREET, CALCUTTA.

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS TRUBNER & CO.
57 AND 59, LUDGATE HILL, LONDON, E. C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| | | |
|---|---|---|
| Advaita Brahma Siddhi Fasc. I—IV @ /6/ each | Rs 1 | 8 |
| Agni Purána, (Sans.) Fasc. II—XIV @ /6/ each | 4 | 14 |
| Aitareya Aranyaka of the Rig Veda, (Sans.) Fasc. I—V @ /6/ each | 1 | 14 |
| Aniruddha's Commentary (English) Fasc. I | 0 | 12 |
| Anu Bháshyam, Fasc. I | 0 | 6 |
| Aniruddha's Commentary (English) Fasc. I | 0 | 12 |
| Aphorisms of Sandilya, (English) Fasc. I | 0 | 6 |
| Aphorisms of the Vedanta, (Sans.) Fasc. VII—XIII @ /6/ each | 2 | 4 |
| Ashtasahasrika Prajnaparamitá Fasc. I—VI @ /6/ each | 2 | 4 |
| Aśvavaidyaka, Fasc. I—V @ /6/ each | 1 | 14 |
| Avadána Kalpalata by Kshemendra (Sans & Tibetan) Vol. I Fasc. 1—3 @ 1/ Vol. II, Fasc. 1 | 4 | 0 |
| Bhamatí, (Sans.) Fasc. I—VIII @ /6/ each | 3 | [illegible] |
| Brahma Sutra (English) Fasc. I | [illegible] | 12 |
| Brihaddevatá, (Sans.) Fasc. I—II @ /6/ each | 0 | 12 |
| Brihaddharma Puranam, Fasc. I—II @ /6/ each | 0 | 12 |
| Brihat Aranyaka Upanishad, (Sans.) Fasc. VI VII & IX @ /6/ each | 0 | 12 |
| Ditto (English) Fasc. II—III @ /6/ each | 1 | 2 |
| Brihat Sanhitá, (Sans.) Fasc. II—III V—VII @ /6/ each | 0 | 12 |
| Chaitanya Chandrodaya Nataka, (Sans.) Fasc. II—III @ /6/ each | 1 | 14 |
| Chaturvarga Chintamani, (Sans.) Vols. I Fasc. 1—11, II 1—25, III Part I Fasc. 1—18, Part II Fasc. 1—7 @ /6/ each | 0 | 12 |
| Chhandogya Upanishad (English) Fasc. II | 22 | 14 |
| Daśarupa, Fasc. II and III @ /6/ | 0 | 6 |
| Gobhiliya Grihya Sutra, (Sans.) Fasc. I—XII @ /6/ each | 0 | 12 |
| Hindu Astronomy, (English) Fasc. II—III @ /6/ each | 4 | 8 |
| Kála Mádhava, (Sans.) Fasc. I—IV @ /6/ | 0 | 12 |
| Katantra, (Sans.) Fasc. I—VI @ /12/ each | 1 | 8 |
| Katha Sarit Sagara, (English) Fasc. I—XIV @ /12/ each | 4 | 8 |
| Kaushitaki Brahman Upanishads, Fasc. II | 10 | 8 |
| Kurma Purana (Sans.) Fasc. I—IX @ /6/ each | 0 | 6 |
| Lalita Vistara (Sans.) Fasc. II—VI @ /6/ | 3 | 6 |
| Lalita-Vistara, (English) Fasc. I—III @ /12/ each | 1 | 14 |
| Madana Parijáta, (Sans.) Fasc. I—VIII @ /6/ each | 2 | 4 |
| Manutika Sangraha, (Sans.) Fasc. I—III @ /6/ each | 3 | 0 |
| Markandeya Purana, (Sans.) Fasc. IV—VII @ /6/ each | 1 | 2 |
| Márkandeya Purána (Eng.) Fasc. I—II @ /12/ each | 1 | 8 |
| Mimansa Darsana, (Sans.) Fasc. II—XIX @ /6/ each | 1 | 8 |
| Narada Pancharatra, (Sans.) Fasc. IV | 6 | 12 |
| Narada Smriti, (Sans.) Fasc. I—III @ /6/ | 0 | 6 |
| Nayavártikam, (Sans.) Fasc. I | 1 | 2 |
| Nirukta, (Sans.) Vol. I, Fasc. 4—6, Vol. II Fasc. 1—7; Vol. III, Fasc. 1—6; Vol. IV, Fasc. 1—7 @ /6/ each Fasc. | 0 | 6 |
| Nitisara, or The Elements of Polity, By Kamandaki, (Sans.) Fasc. II—V @ /6/ each | 8 | 4 |
| [illegible] | | |

ऐन्द्री षष्ठी द्वितीयायामुभौ देवौ निपातितौ ॥२१॥
दृशाचरन्तु प्राग्यर्थं मानसं सूक्तमुत्तरम्(१)।
चौष्णेन्द्राणि कुहे(क)त्यच आग्नेयाभ्यां पराणि तु ॥२२॥
द्वयोऽचास्याश्विन(२)स्त्रेक ऐन्द्राग्न(३) उत्तमे युवम्(ख)।
भद्रं(ग) सौम्यं प्रवि(घ)यौष्णं चौष्णेन्द्राणि पराण्यतः ॥२३॥
तेषामाद्येन मन्तः सन्(४) स्तानि कर्माणि शंसति।
यथा चरति भूतेषु यथा वर्धति पाति(५) च ॥२४॥
सूक्ते तदस्मिन्नष्टाभिर्व्वर्ग्मि(६)रक्तमभू(ङ)रिति(७)।
सप्ते(च)ति मरुतः स्तौति पर्ज्जन्यं स्तौत्र(छ)मुत्तरा ॥२५॥
अग्निमिन्द्रञ्च सोमञ्च पीवानं मेघ(८)मर्धति।
पूर्व्वीऽर्द्धर्चोऽपर(९)स्तस्याः पर्ज्जन्यं वायुना सह ॥२६॥

---

(१) उच्यते इति क० ग० घ० च०।
(२) द्वयोऽस्यास्त्वाश्विन इति ख०।
(३) ऐन्द्राग्नामिति क० ग० घ० च०।
(४) स इति क० घ० च०।
(५) वातीति ख० ङ० पुस्तकान्तरञ्च।
(६) तदस्मिन्नर्द्धर्चे त्वृग्भिरिति क० ग० घ० च०।
(७) अभूर्व्वितीति क० घ०, प्रभूर्व्वितीति ग०।
(८) मरुत स्तौति स्तौति वषमिति क० घ० च०।
(९) पूर्व्वोऽर्द्धर्चोत्तरः इति क० ग० घ० च०।

---

(क) ऋ० १०, २२, १। (ख) ऋ० १०, २४, ६। (ग) ऋ० १०, २५, १।
(घ) ऋ० १०, २६, १। (ङ) ऋ० १०, २७, ०। (च) ऋ० १०, २७, १५।
(छ) ऋ० १०, २७, १७।

विक्रोशनास[क] इत्यग्निमुत्तरा सूर्य्यमर्चति[१] ।
एतौ मे[ख]ऽयं य[ग] इत्येते स्तुतिश्चैवेन्द्रवज्रयोः[२] ॥२७॥
वृचे वृचे[घ] धनुश्चैन्द्रं[३] देवाना[ङ]मिति तु त्र्यृचः ।
शीतोष्णवर्षदातारः पर्जन्यानिलभास्कराः ॥२८॥
अन्त्ये सूर्य्यानिलौ चोभौ स्तूयेते च पदे[४] सह ।
मा ते जीवातु[च]रित्यस्यामिन्द्रो वा सूर्य्य एव वा ॥२९॥
विश्वो ह्यो[छ]न्यत्र[५] संवाद[६] स्नुषेः शक्रस्य चैव हि ।
युग्मा एव तु शक्रस्य अयुग्मा एव तु स्नुषेः[७] ॥३०॥
स्नुषेन्द्रस्यागतान् देवान् दृष्ट्वा शक्रमनागतम् ।
यज्ञे परोक्षवत् प्राह श्वशुरो नागतो मम ॥३१॥
यद्यागच्छेद्भक्षयेत् स[ज] धानाः सोमं पिबेदपि ।
इति तस्या वचः श्रुत्वा तत्क्षणादैत्यवज्रभृत् ॥३२॥
तिष्ठन् वेद्यामुत्तरस्यामुवाच परोक्षवत्[८] ।

---

(१) सवत्विति क॰ ग॰ घ॰ च॰ ।
(२) एता उभौ तैलाविति स्तूयेते वज्रमुत्तरेति क॰ घ॰ च॰ ।
(३) ऐन्द्रीति क॰ घ॰ च॰, ऐन्द्रीमिति ग॰ ।
(४) पदे संस्तूयते इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(५) ह्यन्यत्विति क॰ ग॰ घ॰ च॰ ।
(६) संवादमिति ख॰ ङ॰ ।
(७) युग्माः शक्रस्य विज्ञेया वस्तुकस्येतरा ऋचः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) स्नुषेन्द्रस्यागतान् देवानित्यादिसार्द्धश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।

---

(क) ऋ॰ १०,२७,१८। (ख) ऋ॰ १०,२७,२०। (ग) ऋ॰ १०,२७,२१।
(घ) ऋ॰ १०,२७,२२। (ङ) ऋ॰ १०,२७,२३। (च) ऋ॰ १०,२७,२४।
(छ) ऋ॰ १०,२८,१। (ज) ऋ॰ १०,२८,२।

तृतीयया चतुर्थ्या च प्रदेवत्रे(क)त्यपां स्तुतिः(१) ॥२३॥
अपां नपा(ख)दित्यनेन नामाग्नि(२)र्मध्यमः स्तुतः ।
प्रति य(ग)दैश्वदेवन्तु(३) त्तस्य मे(घ)त्यैन्द्रमुत्तरम्(४) ॥२४॥
वैश्वदेवी प्रमे(ङ)त्येका सं मे(च)त्यैन्द्रो(५)द्वृचः(६) परः ॥
कुरु श्रवण(छ)मर्चन्ति(७) परे द्वे(८) त्रासदस्यवम् ॥२५॥
न्वते मित्रातिथौ राज्ञि तं नपातन्त्वृषिः परैः ।
उपमश्रवसं यस्य(ज) चतुर्भिः स व्यशोकयत् ॥२६॥
प्रावेपा(झ) इति सूक्तं यत्तद्वृचस्तुति(९)रुच्यते ।
अचा(१०)त्रान् द्वादशी स्तौति नवम्याद्या च(११) सप्तमी ॥२७॥

(१) प्रदेवत्रेत्यपां स्तुताविति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) नामाग्निरिति क० घ० च० ।
(३) त्विति क० ग० घ० च० ।
(४) उत्तममिति ख० ङ० पुस्तकान्तरञ्च ।
(५) तस्याश्चैन्द्रः इति क० घ० च० ।
(६) घृच' इति ग० ।
(७) चर्चन्तः इति ख० ङ० पुस्तकान्तरञ्च ।
(८) परः षडिति क० घ० च० ।
(९) तद्वस्तेति क० घ० च० ।
(१०) तत्रेमि ख० ङ० ।
(११) चयेति ख० ङ० पुस्तकान्तरञ्च ।

(क) ऋ० १०, ३०, १ । (ख) ऋ० १०, ३०, ४ । (ग) ऋ० १०, ३०, १२ ।
(घ) ऋ० १०, ३१, १ । (ङ) ऋ० १०, ३२, १ । (च) ऋ० १०, ३३, २ ।
(छ) ऋ० १०, ३३, ४ । (ज) ऋ० १०, ३३, ६ । (झ) ऋ० १०, ३४, १ ।

पयोदधौ हविं स्तौति कितवश्चानुप्राशति[१]।
ऋचां[२]स्तु शेषाश्चिन्दन्ति ऋवुधं[क] वैश्वदेवते[३] ॥३८॥
सावित्रमेके मन्यन्ते मह्रः अग्रे[ख] स्तवं परम्।
आचार्य्याः शौनको यास्को गालवश्चोत्तमात्त्वचम्[४] ॥३९॥
ममः[ग] सौर्य्यमैन्द्रमग्निर्[घ] सौर्य्यं पथ्या तु याः स्तुताः[५]।
निपातिनी[६]स्ताः सूक्तान्ते वैश्वदेवो[७]ऽथ तु द्वृचः[८] ॥४०॥
आश्विनानि तु य[ङ]स्तौति ऐन्द्राण्यस्ते वसु[च] प्र च।
ऐन्द्राण्यामुत्तमा यास्तु स्ततोऽर्द्धर्चे[९] बृहस्पतिः[छ] ॥४१॥
परे दिवः पर्य्या[ज]ग्नेये प्रथमश्चोत्तमा तु या[१०]।

(१) एतच्छ्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(२) ऋचाः इति ङ०।
(३) वैश्वदेवतमिति पाठः साधुः।
(४) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।
(५) पथ्या तु संस्तुतः इति ख० ङ० पुस्तकान्तरश्च।
(६) निपातिन इति ख० ङ०।
(७) सूक्तान्त्यो वैश्वदेवः इति क० ग० घ० च०।
(८) द्वृचः इति ग०।
(९) यास्तु यर्द्धर्चे स्तिति क० ग० घ० च०, याः स्तुतास्तोऽर्द्धर्चे इति ङ०।
(१०) उत्तमेन स्तिति ख० ङ० पुस्तकान्तरश्च।

(क) ऋ० १०, ३५, १। (ख) ऋ० १०, ३६, १२। (ग) ऋ० १०,३७,१।
(घ) ऋ० १०, ३८, १। (ङ) ऋ० १०, ३६, १। (च) ऋ० १०, ४२, १।
(छ) ऋ० १०, ४२, ११। १०,४३, ११। १०, ४४, ११। (ज) ऋ० १०,
४५, १।

द्यावापृथिव्यौ विश्वे च पश्चा[१]द्दूर्चेन संस्तुताः ॥४२॥
आसीत् काचीवती घोषा पापरोगेण दुर्भगा।
उवास षष्टिवर्षाणि पितुरेव गृहे पुरा ॥४३॥
आतस्थे महती चिन्ता न पुत्रौ न पतिर्मम।
जरां प्राप्ता सुधा तस्मात् प्रपद्येऽहं शुभस्पती ॥४४॥
यथैतौ मामकस्तात आराध्यावाप यौवनम्।
आयुरारोग्यमैश्वर्य्यं सर्व्वंभूतहने विषम्[२] ॥४५॥
रूपवत्तास्तु सौभाग्यमहं तस्य सुता यदि।
ममापि मन्त्राः माद्गुःस्युर्यैः स्तोष्येते मयाश्विनौ ॥४६॥
चिन्तयन्तीति सूक्तानि त्रीणि घोषा ददर्श सा।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या अगान्तरम् ॥४७॥
प्रविश्य विजरारोगां सुभगाञ्चक्रतुश्च तौ।
भर्त्तारं ददतुस्तस्यै सुहस्त्यञ्च सुतं मुनिम्[३] ॥४८॥
ददतुस्तौ सुपर्णाभ्यां यत्नासत्येति[४] कीर्त्तिते।
काचीवत्यै च घोषायै तथा ददतुरोजसा[५] ॥४९॥

---

(१) पश्चौ इति ख॰ ग॰ ङ॰।
(२) सर्व्वंभूतहते धियमिति ङ॰।
(३) मनोरिति ङ॰।
(४) येनास्त्येतीति ख॰।
(५) न तस्यां मातुरोनयेति ख॰ ङ॰ पुस्तकान्तरस्य। आसीत् काचीवती घोषेत्यादि सप्त श्लोकाः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न सन्ति।

प्राजापत्यासुरी त्वासीद्दिकुण्ठा नाम नामतः।
सेच्छतीन्द्रसमं पुत्रं तेपेऽथ सुमहत्तपः ॥५०॥
सा प्रजापतितः कामान्[१] लेभेऽथ विविधान् वरान्[२]।
तस्याश्चेन्द्रः स्वयं[३] जज्ञे जिघांसुर्दैत्यदानवान् ॥५१॥
एकदा[४] दानवैः सार्द्धं समरे समसज्जत।
जघान तेषां नवतीर्नव सप्त च सप्तधा[५] ॥५२॥
भित्वा[६] स्वबाहुवीर्येण हैमरौप्यायसीः[७] पुरीः।
हत्वा सर्व्वान् यथास्थानं पृथिव्यादिष्ववस्थितान्[८] ॥५३॥
राज्यं प्राप स दैत्येषु स्वेन वीर्य्येण दर्पितः।
देवान् बाधितुमारेभे मोहितोऽसुरमायया ॥५४॥
बध्यमानास्तु तेनापि वसुरेणामितौजसा।
उपाधावन्नृषिश्रेष्ठं तत्प्रबोधाय सप्तगुम्[९] ॥५५॥

---

(१) काममिति क॰ घ॰ च॰।
(२) सुमहत्तपाः इति क॰ ग॰ घ॰ च॰।
(३) सुतः इति ख॰ ङ॰ पुस्तकान्तरयोः।
(४) एकस्येति क॰ घ॰ च॰।
(५) सप्तकानिति ख॰ ङ॰ पुस्तकान्तरयोः।
(६) जित्वेति ख॰ ङ॰ पुस्तकान्तरयोः।
(७) हैमवत्यायसीरिति क॰ घ॰ च॰।
(८) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम्।
(९) राज्यं प्राप स दैत्येष्वित्यादिश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नित पुस्तकेषु नास्त्येव।

पृथिव्यां कालकेयांश्च पौलोमांश्चैव धन्विनः ।
तांश्च युच्छादयामास[1] प्रह्लादतनयानपि[2] ॥५६॥
ऋषिस्तु सप्तगुर्नाम तस्यासीत्सुप्रियः सखा ।
स चैनमभितुष्टाव जगृभ्मे[क]ति करे स्पृशन् ॥५७॥
ततः स[3] बुद्ध्वा चात्मानं सप्तगुस्तुतिहर्षितः ।
आत्मानमेव तुष्टाव अहं[4] भुव[ख]मिति त्रिभिः ॥५८॥
कीर्तयन् स्वानि कर्माणि यानि स्म कृतवान् पुरा ।
यथाकरोत् स[5] वैदेहं ध्वंसं सोमपतिं[6] नृपम् ॥५९॥
वसिष्ठशापादभवद्विदेहो[7] नृपतिः पुरा ।
इन्द्रप्रसादादीजे स[8] सवैः[9] सारस्वतादिभिः ॥६०॥
सम्भृतां भक्तिमत्ताश्च प्रभूणामपरिक्रियाम्[10] ।

(१) युच्छादयन् सर्वानिति ख० ङ० पुस्तकान्तरञ्च ।
(२) दितीति क० ग० घ० च० ।
(३) सिति ख० ङ० पुस्तकान्तरञ्च ।
(४) चाहमिति ख० ङ० पुस्तकान्तरञ्च ।
(५) चेति क० ग० घ० च० ।
(६) ध्वसं सोमपतिरिति क० घ० च०, सौमपतिमिति ङ० ।
(७) वैदेहं इति ग० ।
(८) चेति क० ग० घ० च० ।
(९) मन्त्रैरिति पुस्तकान्तरम् ।
(१०) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(क) ऋ० १०, ४७, १। (ख) ऋ० १०, ४८, १।

विष्णुर्लोकेषु(१) चैश्वर्य्यं प्रभुत्वं भुवनेषु च ॥६१॥
प्र वो महे(क) इति त्वष्टामात्मन्ये(२) वारयन् स्वयम्(३)।
वैश्वानरे गृहपतौ यविष्ठेऽग्नौ च पावके ॥६२॥
वषट्कारेण ऋक्ष्वेषु अग्नौ च(४) सहसः सुतौ(५)।
अपचक्राम देवेभ्यः सौचीकोऽग्नि(६)रिति श्रुतिः ॥६३॥
स प्राविशदपक्रम्य ऋतूनपो वनस्पतीन्।
ततोऽसुराः प्रादुरासन्नष्टेऽग्नौ हव्यवाहने ॥६४॥
तेऽग्निमेवान्वैषन्त देवा हन्तासुरान् युधि।
तन्तु दूराद्यमश्चैव वरुणश्चान्वपश्यताम् ॥६५॥
उभावेनं समादाय देवानेवाभिजग्मतुः।
दृष्ट्वा देवास्तमूचुरग्ने हव्यानि नो वह ॥६६॥
वरं वृणीष्व मत्तस्त्वं चित्रभानो भजस्व नः(७)।
प्रत्युवाचाथ तानग्निर्विश्वे देवा यदात्थ माम्(८) ॥६७॥
तत्करिष्ये जुषन्तान्तु होत्र(९) पञ्च जना मम।

(१) नभु सर्व्वेष्विति क॰ ग॰ घ॰ च॰।
(२) आत्मनः इति क॰ ग॰ घ॰ च॰।
(३) वीर्य्यमच्चयमिति ग॰।
(४) त्विति ख॰ पुस्तकान्तरञ्च।
(५) भ्रातृवर्गौ सह सुताविति ख॰ ग॰, सहसस्तवे इति छ॰।
(६) अभिचक्राम सौचिको भयादग्निरिति क॰ ग॰ घ॰ च॰।
(७) चेति क॰ घ॰ च॰।
(८) वैश्वानराय दातु मेति क॰ घ॰ च॰, विश्वे भूत यथाक्रमादिति ग॰।
(९) होत्रमिति ख॰ ग॰ छ॰ पुस्तकान्तरञ्च।

(क) ऋ॰ १०, ५०, १।

ग्राम्यमुख्यः[१] प्रणीतश्च पुत्रो गृहपतेश्च यः ॥६८॥
उत्तरो दक्षिणश्चाग्निरेते पञ्च जनाः स्मृताः।
मनुष्याः पितरो देवा गन्धर्वोरगराक्षसाः ॥६९॥
यास्कौपमन्यवा[२]वेतानाहतुः पञ्च वै जनान्।
निषादपञ्चमान् वर्णान् मन्यते शाकटायनः ॥७०॥
ऋत्विजो[३] यजमानश्च शाकपूणिस्तु मन्यते।
[४]आयुरस्तु च मे दीर्घं हवींषि विविधानि च ॥७१॥
अरिष्टिः पूर्वजानाञ्च भ्रातृणामध्वरेऽध्वरे[५]।
प्रयाजा[क]श्चानुयाजाश्च घृतं सोमे पयः[६] पशुः ॥७२॥

(१) ग्रामामुख्य॰ इति ग॰।
(२) यास्कोपमन्यवाविति क॰ घ॰ च॰।
(३) ऋत्विजेति ख॰।
(४) ख॰चिह्नितपुस्तके आयुरस्तु च मे दीर्घमिति श्लोकाद्प्राक्,—
श्रोताध्वर्युश्च उद्गाता ब्राह्मणे तान् वदाति तान्।
चक्षुः श्रोत्रं मनो वाक् च प्राणश्चेत्यात्मवादिनः।
गन्धर्वाप्सरसो देवा मनुष्याः पितरस्तथा।
सर्पाश्च ब्राह्मणाश्चैव श्रूयन्ते ह्येवरैयके।
ये चान्ये पृथिवीजाता देवाचान्येऽय वह्नयो।
इत्यधिकं पठितम्।
(५) भ्रातृणामेवमध्वरे इति ख॰।
(६) च यः इति ख॰ ग॰।

(क) ऋ॰ १०, ५१, ८।

मद्दैवत्यानि(१) वै सन्तु यज्ञो मद्देवतोऽस्तु च(२) ।
तवाग्ने यत्र (क)इत्येतत् प्रत्यर्द्धि(३) स्विष्टकृच्च सः(४) ॥७३॥
तस्य(५) त्रीणि सहस्राणि नव त्रीणि (ख)शतानि च ।
त्रिंशच्चैव तु देवानां सर्व्वाण्येव(६) वरान् ददुः ॥७४॥
ततोऽग्निः सुमनाः प्रीतो विश्वैर्देवैः पुरस्कृतः ।
विधूयाङ्गानि यज्ञेषु चक्रे शौच(७)मतन्द्रितः ॥७५॥
भ्रातृभिः सहितः प्रीतो दिव्यात्मा हव्यवाहनः ।
तस्यास्थि देवदार्व्वासीन्मेदो मांसञ्च गुग्गुलुः ॥७६॥
सुगन्धि तेजनं स्नायुः(८) शुक्रं रजतकाञ्चने ।
रोमाणि काशाः(९) केशास्तु कुशाः कूर्म्मा नखानि च ॥७७॥
अन्त्राणि शैवलास्त्वेव मज्जा सिकतशर्कराः(१०) ।

---

(१) मे दैवत्यानीति ख०, मद्दैवत्यान्विति ग०, मद्दैवत्यानीति क० घ० च० ।
(२) स्तुचः इति ग० ।
(३) प्रत्यार्द्धीति ग० ।
(४) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) तस्येति क० ग० घ० ङ० च० ।
(६) सर्व्वाण्येतानिति ख० ।
(७) शौचमिति ग० ।
(८) स्नुचिति क० घ० च०, सुगन्धं तजनत् स्नायुरिति ख० ।
(९) कोशाविति क० घ० च० ।
(१०) सिकतशर्कराः इति ख०, सिकतशार्करा इति ग० ।

---

(क) ऋ० १०, ५१, ९ । (ख) ऋ० १०, ५२, ६ ।

असृक्पित्तञ्च विविध धातवो गैरिकादय ॥७८॥
एवमग्निश्च देवाश्च सूक्तैर्मह्न[क]दिति त्रिभि ।
समूदिरे[ख] परे तस्मादैन्द्रे सूक्ते तु ता स्तुते ॥७९॥
विधुन्दद्राण[ग]मित्यस्या सूर्य्याचन्द्रमसौ स्तुतौ ।
प्राणवच्चात्मवच्चापि स्तुतिरप्यत्र दृश्यते[१] ॥८०॥
इद [घ]द्वे वैश्वदेवे च द्वितीयेऽर्य्यमणो द्वृच[२] ।
प्रथमैन्द्री द्वितीयाग्नेय्यन्त्या तत्सोमदेवता[३] ॥८१॥
[४]जीवावृत्ति सबन्धो[५]र्वा यदि वा मनस स्तव ।
राजासमातिरैक्ष्वाको[६]रथप्रोष्ठ[७] पुरोहितान् ॥८२॥

(१) एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु न पठित ।
(२) गिरिसा स्तुतिरिति ख०, द्वच॰ इति ग० ।
(३) प्रथमा त्वैन्द्राग्नेय्यामौ चात्विंन्यामपरन्तु यदिति क० घ० च० ।
(४) ख० चिह्नितपुस्तके जीवावृत्तिरिति श्लोकात प्राक्—
अपि स्तौति पितृनेवदार्त्विज्यञ्च यदुत्तरम् ।
सूक्तमाख्यानसंयुक्त यज्ञकामस्य मे शृणु ।
सम्बोहाश्वत्थजस्य प्रचूणा दभिसृतस्य तु ।
इति सार्द्धैकश्लोकोऽधिक पठित ।
(५) सुबन्धोरिति पाठ साधु यत्र तथादर्शनात् ।
(६) ऐक्ष्वाकुरिति क० घ० च० ।
(७) रथप्रोष्ठा इति ख०, रथप्रोष्ठानिति ग० ।

(क) ऋ० १०, ५१, १ । (ख) ऋ० १०, ५४, १ । (ग) ऋ० १०, ५५, ५ ।
(घ) १०, ५६, १ ।

सूक्तेनाथ स्तुव[1]न्नग्निं द्वैपदेन यथात्रिषु[2] ।
अग्निरित्यब्रवीद्देवा[3]नयमन्तः परैत्सून्[4] ॥८५॥
सुबन्धुरस्य चैक्ष्वाको[5]मया गुप्तो हितार्थिना ।
सुबन्धवे प्रदायासून् [6]जीवेत्युक्त्वा च पावकः ॥८६॥
स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति ।
अयं माते[क]ति चष्टास्ते[7] सुबन्धोरसुमाह्वयन् ॥८७॥
शरीरमभिनिर्दिश्य सुबन्धोः पतितं भुवि ।
सूक्तशेषं जगुस्तस्य चेतसो धारणाय ते ॥८८॥
लभ्यास्त्वाय[ख]मित्यस्मां पृथक्पाणिभिरस्पृशन् ।
षड्विद[ग] वैश्वदेवानि द्वितीयेऽङ्गिरसां स्तुतिः[घ] ॥८९॥
जन्म कर्म च सख्यञ्च[9] इन्द्रेण सह कीर्त्तयन् ।

---

(१) सूक्तेनैषा स्तुवन्निति क० ग० घ० च० ।
(२) द्वैपद यत्तदग्निमिति क० घ० च० ।
(३) देवानिति ग० ।
(४) परा यसुरिति क० ग० घ० ङ० च० ।
(५) सुबन्धोरस्य चैक्ष्वाकोरिति क० ख० घ० च० ।
(६) असुमिति ख० ग० ।
(७) प्रैषेष्वेति ख० ।
(८) ऋषिरिति क० घ० च० ।
(९) सख्याच्चेति क० घ० च० ।

---

(क) ऋ० १०, ६०, ७। (ख) ऋ० १०, ६०, १२। (ग) ऋ० १, ६१, १।

स्तौति प्रनून[क]मित्याद्याः सावर्ण्यस्य मनोः स्तुतिः ॥१००॥
तस्यैव चायुषोऽर्थाय देवान् स्तौत्यभ्ययादृषि ।
स्तुवामाण [ख]मह्निमूषु[१] इचस्ये[ग]त्यदितेः स्तुतिः ॥१०१॥
पथ्यास्वस्ति स्वस्ति [घ]त्यङ्ग्निस्वस्तितो मरुता स्तुतिः ।
मारुतीमृचमन्याहेत्युक्तमाध्वर्य्यवेषु हि ॥१०२॥
या गो[ङ]रिति तथैवान्या स्तूयते मध्यमानुवाक् ।
मित्राय मैत्रावरुणी भुज्युमहस्य[च] आश्विनौ[२] ॥१०३॥
स्तौत्यापि च मनु स्वस्ति हुचे[३] वाचस्य मध्यमा ।
अथेमा[छ] द्वे बार्हस्पत्ये भद्रा [ज]आग्नेयमाश्रिय[४] ॥१०४॥
यज्ज्योतिरमृतं ब्रह्म यद्योगात्समुपाश्नुते ।
तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिः ॥१०५॥
जीवनार्थं प्रयोगस्तु मन्त्राणां प्रतिषिध्यते ।
वेदतत्त्वार्थविज्ञानं प्रायेणाच हि दृश्यते ॥१०६॥

---

(१) मह्निमूषौति ख० ।
(२) स्तौति प्रनूनमित्याद्या इत्यादि भुज्युमहस्य आश्विनौयन्तपाठ क० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(३) सुचे इति ग० ।
(४) अथाग्नेयमथाश्रय इति क० घ० च०, यद्वा आग्नेयमाश्रिया इति ख० ।

---

(क) ऋ० १०, ६२, ८ । (ख) ऋ० १०, ६३,१० । (ग) ऋ० १०, ६४, ५ ।
(घ) ऋ० १०, ६३, १५ । (ङ) ऋ० १०, ६५, ६ । (च) ऋ० १०,६५, १२ ।
(छ) ऋ० १०, ६७, १ । (ज) ऋ० १०, ६८, १ ।

आचार्य्याः केचिदित्याऊरत्र वाग्विदुषां स्तवः।
यथाभिर्निन्द्यते[१] तृम्भिः सूक्तेऽन्याभिरनर्थवित् ॥१०७॥
ये दैनामन्वविन्दन्त विद्वांस ऋषितां शचीम्[२]।
तथा च ऋभजद्यज्ञे तद्वचोक्तं[३] तृतीयया ॥१०८॥
प्रशस्यते द्वयम्यां[४] तु विद्वानुत्तमया तृचा[५]।
यज्ञे महर्त्विजामाह विनियोगश्च कर्म्मणाम् ॥१०९॥
परे तु स्तूयते चोक्ता अष्टौ[क] चैवादितेः[६] सुताः।
धातेन्द्रो वरुणो मित्रः अंशः सूर्य्योऽर्य्यमा भगः ॥११०॥
ऐन्द्रेऽजनिष्टाः[७] सूक्ते द्वे प्रशि[ख]त्यत्र परन्तु यत्।
तत्र प्राच्यः प्रतीच्यश्च ध्रुवग्यो दक्षिणाश्च याः[८] ॥१११॥
ताः सप्त सप्तकैर्वर्गैः संस्तूयन्ते प्रधानतः[९]।

(१) तथाहिं निन्द्यते इति ख०।
(२) विद्वासर्षिंमवा सतीमिति ख०, विद्वासर्षिंमवा सवीमिति ग०।
(३) उक्त इति क० घ० च०।
(४) द्वयम्येति ग०।
(५) तृचेति ख० ग०।
(६) चार्स्य ऋष्टौ चादितये इति क० घ० च०।
(७) अनिष्टा इति क० घ० च०।
(८) दक्षिणाश्चेति ख०, दक्षिणाश्चया इति ग०।
(९) द्वयकैऽभि संस्तूयन्ते विभक्तय इति ग०।

(क) ऋ० १०, ७२, ८। (ख) ऋ० १०, ७५, १।

यावृणामा वो[क] मारुते द्वे अभ्रप्रुष[ख] इति स्मृते ॥११२॥
अपश्य[ग]मिति चाग्नेये य इमा[घ] वैश्वकर्म्मणे।
मान्यवे यस्त[ङ] इत्येते परं यत्तु मम व्रते ॥११३॥
तदाशीर्वादवद्रूलं स्तौति विश्वान् दिवौकसः।
परा[च] कद्रा स आग्नेयं[१] य[छ]द्[ज]दित्यष्टकं परम् ॥११४॥
मैत्रावरुण्युक्तचास्ति चतुर्थ्यैन्द्राण्युपोत्तमा।
सावित्री चैव सूर्य्या च सैव पत्नी विवस्वतः ॥११५॥
स्तुता वृषाकपायी[झ]ति उषा इति च योच्यते[२]।
उषा ह्येषा[३] त्रिधात्मानं विभज्य प्रैति[४] गोपतिम् ॥११६॥
उषा[५] पुरोदये भूत्वा सूर्य्या मध्यन्दिने स्थिते।
भूत्वा वृषाकपायी च दिनान्तेष्वनुकीर्तिनी[६] ॥११७॥

---

(१) आग्नेये इति क॰ ग॰ घ॰ च॰।
(२) च पूषा इवितयोच्यते इति ख॰।
(३) यषेति क॰ ग॰ घ॰ च॰।
(४) अभ्येतीति ख॰।
(५) उषाः इति क॰ घ॰ च॰।
(६) वृषाकपायीति दिनान्तेष्वेव गच्छतीति ख॰।

---

(क) ऋ॰ १०, ७६, १। (ख) ऋ॰ १०, ७७, १। (ग) ऋ॰ १०, ७९, १।
(घ) ऋ॰ १०, ८२, १। (ङ) ऋ॰ १०, ८३, १। (च) ऋ॰ १०, ८५,२९।
(छ) ऋ॰ १०, ८५, १४। (ज) ऋ॰ १०, ८५, २१। (झ) ऋ॰ १०, ८६, १३।

सत्यसूर्य्यर्त्तुसोमानां सौर्य्यांश्च द्व्यृगुच्यते।
पराभिस्तिसृभिस्तृग्भि[१]रुच्यते सोम चौषधः[२] ॥११८॥
विश्वष्टमुत्तरा त्वासामृक् चन्द्रमसमर्चति।
सूर्य्यायै भाववृत्तन्तु रैभी[क]त्वष्टाभिरुच्यते ॥११९॥
य[ख]दश्विनौ हृच[३]स्तौति सूर्य्यं[४] एवोत्तरार्चति।
सप्तदशौ वैश्वदेवौ सूर्य्याचन्द्रमसौ परा ॥१२०॥
परस्याः प्रथमौ पादौ सौर्य्यौ चान्द्रमसौ परौ।
श्रौर्णनाभो हृचे त्वश्विनावश्विनौ मन्यते स्तुतौ ॥१२१॥
सूर्य्याचन्द्रमसौ तौ हि प्राणापानौ च तौ स्मृतौ।
अहोरात्रे[५] च तावेव स्यातां तावेव रोदसी ॥१२२॥
अनुवाते हि तौ लोकाञ्ज्योतिषा च रसेन च।
पृथक् पृथक्के चरतु[६] दक्षिणेनोत्तरेण च ॥१२३॥

---

(१) त्वचेति ख०।
(२) चौषधिरिति ग०।
(३) त्र्यृच इति ग०।
(४) सूर्य्यमिति पाठः साधुः।
(५) अहोरात्राविति ख०।
(६) तौ चरतः इति पाठः सङ्गतः। चेरतुरिति ग०।

---

(क) ऋ० १०, ८५, ६। (ख) ऋ० १०, ८५, १४।

[१]सुकिंशुक[क]मिति तस्यां सूर्य्यामारोहतीं पतिम्।
स्तौति विश्वावसुश्चैव हृचे[२] गन्धर्व्वमुत्तरे ॥१२४॥
अनुचरा[ख] इत्यनया यौ तौ[३] स्तौतीह दम्पती।
गृहान् प्रपद्यमानान्तु पराभिः पञ्चभिर्वधूम् ॥१२५॥
वाससस्तु वधूनाञ्च वरदानं प्रपद्यते।
ततस्त्रिभिर्विरागस्य यद्धव[ग][४] इति वाससः ॥१२६॥
तद्युक्तया तया स्पर्शो निद्रिते पत्युरेव च।
अगुत्तरा तृतीयस्य विभवे सति वाससः ॥१२७॥
अन्यत्र मैथुनाद्धर्त्तुर्हरणं प्रतिषिध्यते।

---

(१) ख॰ चिह्नितपुस्तके सुकिंशुकमिति श्लोकात् प्राक्,—
सूर्य्यः सरति भूतेषु सवीरः सवितापि वा।
सुदयत्नापायेषु सर्व्वकार्य्याणि स वदत्॥
याच द्रवति वाचा च स्यावमिन्द्रतुमुच्यते।
वनेषमे समेतानि निर्म्मितेऽथ चन्द्रमोः॥
इत्यधिकपाठोऽस्ति।
(२) ह्युचे इति ग॰।
(३) यात्वे इति ख॰।
(४) यद्धवइति वाससः इत्यादि अगुत्तरा तृतीयस्येत्यन्तपाठः क॰ ग॰ घ॰ ङ॰ चिह्नितपुस्तकेषु न विद्यते।

---

(क) ऋ॰ १०, ८५, २०। (ख) ऋ॰ १०, ८५, २३। (ग) ऋ॰ १०, ८५, ३०।

ये(क) यक्ष्मनाशिनीं स्तौति द्व्यृचे(१)मा परिपन्थिनः ॥१२८॥
अष्टमे य(ख)द्दिति त्वाह यादृग्वाधूयमर्हति ।
आशास्ते(२) चैव विविधं ज्ञातिभ्यश्चानुशासनम्(३) ॥१२९॥
सङ्गा स्त्री भाववृत्ति(४)श्च परया त्वत्र कथ्यते ।
पराभिराशीराशास्ते पृथक् ताभ्यः सहैव च । ॥१३०॥
मन्त्रा वैवाहिका ह्येते निगद्यन्ते नृणामपि ।
आशिष्या यजमानाश्च यथारूपं विशेषतः ॥१३१॥
प्रत्यृचं प्रतिकीर्त्यन्ते देवताश्चेह यासु याः(५) ।

---

(१) ऋचे इति ग० ।
(२) आशास्तीति क० ग० घ० च० ।
(३) ज्ञातिभ्यश्चानुशासनमिति ख० ।
(४) भावक्लिप्तिरिति क० घ० च० ।
(५) ख० चिह्नितपुस्तके, पराभिराशीराशास्ते इत्यादि देवताश्चेह यासु या इत्यन्तपाठो न विद्यते । तत्र अस्मिन् स्थले,
गृभ्णामि(ग)त्यविवाणोऽस्त्वन्द्र धनमाशिषः ।
आशास्ते परयास्त्वस्त्रा संयोगार्थास्त्वयाशिषः ।
पराभिराशिषः शास्ते पृथक् ताभ्यां सह क्वचित् ।
अघोरे(घ)ति ऋचे तस्याः स(ङ)मिहेति ह्ययोर्द्वयोः ॥
आशा प्रजापते प्रेमानथ(च) यथारूपं विशेषतः ।
प्रत्यृचं कीर्त्यते देवता तेषु भाववृत्ततः ॥
इति पाठो वर्त्तते ।

---

(क) ऋ० १०, ८५,३१ । (ख) ऋ० १०,८५,३५ । (ग) ऋ० १०, ८५,३६ ।
(घ) ऋ० १०, ८५,४४ । (ङ) ऋ० १०,८५,४६ । (च) ऋ० १०, ८५, ४७ ।

वदेत्तां[१] देवतां तासु नराशंसीर्वदेत वा ॥१२१॥
उषंसः सर्व्वया चैता भाववृत्तं प्रचक्षते।
सूर्य्यया यच्च सूक्तेऽस्मिन् पादश्चैवात्र लक्ष्यते ॥१२२॥
वि हि[क] वार्षाकपं सूक्तमसौ तु[२] कपिलो वृषा।
इन्द्रः प्रजापतिश्चैव विश्वस्मादिन्द्र उत्तरः[ख] ॥१२४॥
रक्षोहणा[ग]दि चाग्नेयं[३] चीन् स्तौत्यग्नीन् परं हविः[घ]।
इमच्च मध्यमश्चैव असौ वैश्वानरश्च यः ॥१२५॥
इन्द्रं[ङ] पुरुषसूक्त[च]स्य[४] अन्यया पुरुषस्य तु।
यथैनमभजन् साध्या[५] यज्ञार्थं सोऽर्य्य[६] उच्यते ॥१२६॥
आपान्तमन्यु[छ]रित्यस्यां[७] स्तुतः सोमस्तु[८] दृश्यते।

(१) वदेतामिति ख॰ ग॰।
(२) ह्यौति ग॰।
(३) वामेयमिति क॰ घ॰ च॰।
(४) तथैन्द्रात्पौरुषं सूक्तमिति ख॰।
(५) साध्येति ख॰।
(६) सार्थं इति ख॰।
(७) इत्येतामिति ख॰।
(८) सम्प्रेति ख॰ ग॰।

(क) ऋ॰ १०, ८६, १। (ख) ऋ॰ १०, ८६, ५। (ग) ऋ॰ १०, ८७, १।
(घ) ऋ॰ १०, ८८, १। (ङ) ऋ॰ १०, ८९, १०। (च) ऋ॰ १०, ९०, १।
(छ) ऋ॰ १०, ८९, ५।

साळोक्यात्साहचर्य्याद्वा स्तूयते सोम एव वा ॥१२७॥
निपातभाजं सोमस्य ऋचां रथीतरोऽब्रवीत् ।
ऐन्द्रो ह्येष निपातस्तु[१] स्तुतोऽग्निररुणेन[२]सः ॥१२८॥
यज्ञस्य वो[क] वैश्वदेवे प्रेत[ख] इत्युत्तरन्तु यत् ।
तत्रार्बुदस्तु ग्रावाणं मूर्त्तिमन्तमिवार्चति ॥१२९॥
पुरूरवसि राजर्षावप्सरास्तूर्वशी पुरा ।
न्यवसत् संविदं कृत्वा तस्मिन् धर्म्मञ्चचार च ॥१४०॥
तया तस्य च संवास[३]मसूयन् पाकशासनः ।
पैतामहस्यानुरागमिच्छत्यपि[४] तस्य तु ॥१४१॥
स तयोस्तु वियोगार्थं[५] पार्श्वस्थं वज्रमब्रवीत् ।
प्रीतिम्भिन्ध्यनयो[६]र्वज्र मम चेदिच्छसि प्रियम् ॥१४२॥
तथेत्युक्त्वा तयोः प्रीतिं वज्रो भिदति[७] मायया ।
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृप ॥१४३॥

---

(१) ऐन्द्रेषु हि निपातोऽग्नेति क० ग० घ० च० ।
(२) ववयेन सः इति ख० ।
(३) संवासमिति क० घ० च० ।
(४) सानुरागमिच्छत्स्वपीति क० ग० घ० च०
(५) विभागार्थमिति क० घ० च० ।
(६) प्रीतिम्भिद तयोरिति ग० ।
(७) भिनत्तीति साधु ।

---

(क) ऋ० १०, ६२, १ । (ख) ऋ० १०, ६४, १ ।

वदेत्तां(१) देवतां तासु नराशंसीर्वदेत वा ॥१२१॥
उपंस्थः सर्व्वथा चैता भाववृत्तं प्रचक्षते।
सूर्य्यया सह सूक्तेऽस्मिन् पादश्चैवात्र लक्ष्यते ॥१२२॥
वि हि(क) वार्षाकपं सूक्तमसौ तु(२) कपिलो वृषा।
इन्द्रः प्रजापतिश्चैव विश्वस्मादिन्द्र उत्तरः(ख) ॥१२४॥
रक्षोघ्ना(ग)दि चाग्नेयं(३) त्रीन् स्तौत्यग्नीन् परं हविः(घ)।
इमञ्च मध्यमञ्चैव असौ वैश्वानरश्च यः ॥१२५॥
इन्द्रं(ङ) पुरुषसूक्त(च)श्च(४) अन्यया पुरुषस्य तु।
यथैनमभजन् साध्या(५) यज्ञार्थं सोऽयं(६) उच्यते ॥१२६॥
आपान्तमन्यु(छ)रित्यस्यां(७) स्तुतः सोमस्तु(८) दृश्यते।

---

(१) वदेतामिति ख० ग०।
(२) त्रीति ग०।
(३) वामेयमिति क० ख० घ०।
(४) तथैन्द्रात्मीयं सूक्तमिति ख०।
[illegible] ख०।
(५) कनीयां
(६) भारताविति क
(७) स्वगदोषिणी राजपुत्रः इति
(८) आर्ष्टिषेणस्तुतः इति ग०।

---

(क) ऋ० १०, ८६, १। (ख) ऋ० १०, ८६, १। (ग) ऋ० १०, ८७, १।

राज्येन च्छन्दयामासुः[1] प्रजाः स्वर्गं गते गुरौ ।
स मुहूर्त्तमिव ध्यात्वा प्रजास्ताः प्रत्यभाषत ॥ १५० ॥

इति बृहद्देवतायां सप्तमोऽध्यायः ।

---

(१) छन्दयेयुस्तु राज्यमिति क० ख० ग० ।

# अथाष्टमोऽध्यायः ।



न राज्यमहमर्हामि नृपतिर्वोऽस्तु शन्तनुः ।
तथेत्युक्त्वाभ्यषिञ्चंस्ताः प्रजा राज्याय शन्तनुम् ॥१॥
ततोऽभिषिक्ते कौरव्ये वनं देवापिराविशत् ।
न ववर्षाथ पर्जन्यस्तस्मिन्राष्ट्रे शतं समाः ॥२॥
ततोऽभ्यगच्छद्देवापिं प्रजाभिः सह शन्तनुः ।
प्रसादयामास चैनं तस्मिन् धर्मव्यतिक्रमे ॥३॥
सिषिच(१) चैनं राज्येन(२) प्रजाभिः सहितस्तदा ।
तमुवाचाथ देवापिः प्रह्वं प्राञ्जलिसंस्थितम्(३) ॥४॥
न राज्यमहमर्हामि त्वग्दोषोपहतेन्द्रियः ।
याजयिष्यामि ते राजन् वृष्टिकामेष्ट्या स्वयम् ॥५॥
ततस्तन्तु पुरोऽधत्त आलिङ्ग्याथ स शन्तनुः ।
स चास्य चक्रे कर्माणि(४) वार्षिकाणि यथाविधि ॥६॥

---

(१) सिषेचेति पाठः समीचीनः ।

(२) राज्ये त्विति पाठः साधीयान् । चैव राज्यर्द्धेति क॰ ख॰ ग॰ ।

(३) प्रवक्तुं प्राञ्जलिः स्थितः इति क॰ ख॰ ग॰, प्रह्वन्तु प्राञ्जलिस्थित-मिति घ॰, प्रवक्तुं प्राञ्जलिस्थितमिति पुस्तकान्तरम् ।

(४) चकार सोऽस्य कर्माणीति ख॰ ।

बृहस्पते प्रती(क)त्यृग्भिरौचे चैवं(१) बृहस्पतिम् ।
द्वितीययास्य सूक्तस्य बोधिते जातवेदसा ॥७॥
आस्ये ते द्युमतिं(२) वाचं दधामि स्तुहि देवताः(३) ।
इति(४) सोऽस्मै ददौ प्रीतो वाचं देवीं(५) तया च सः ॥८॥
ऋग्भिस्ततस्त्रिभिर्देवान् जगौ वृष्ट्यर्थमेव तु ।
अग्निश्च सूक्तशेषेण क(ख)मैन्द्रं सूक्तमुत्तरम् ॥९॥
इन्द्रदृह्ये(ग)ति विश्वेषामु(घ)दित्यृत्विक्स्तुतिः परम् ।
भक्तिप्रकाशने तेषां(६) विनियोगोऽस्य कीर्त्यते ॥१०॥
प्रे(ङ)तीतिहाससूक्तन्तु(७) मन्यते शाकटायनः ।

---

(१) प्रतीत्येतदौचे चैवेति क० घ० च० ।
(२) द्युमतीति द्युमतिरिति ख० ।
(३) द्वितीययास्य सूक्तस्येत्यादि दधामि स्तुहि देवताः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत ।
(४) ततः इति क० ग० घ० च० ।
(५) वाचन्देवीमिति क० ग० घ० च० ।
(६) भक्तिप्रकाशने तेषामिति क० ख० ग० घ० च० ।
(७) इतिहासं प्रेति सूक्तमिति ख०, तेतिहासं प्रेति सूक्तमिति पुस्तकान्तरम् ।

---

(क) ऋ० १०, ९८, १। (ख) ऋ० १०, ९९, १। (ग) ऋ० १०, १००, १। (घ) ऋ० १०, १०१, १। (ङ) ऋ० १०, १०२, १।

धास्केन्द्रौ घन[1]मैन्द्रं वा वैश्वदेवन्तु शौनकः ॥११॥
आजावनेन[2] भार्म्याश्च[3] इन्द्रासोमौ तु मुद्गलः।
अजयद्वृषभं[4] युक्त्वा ऐन्द्रश्च द्रुघणं रथे ॥१२॥
युध्यन् संख्ये जयं प्रेप्सुरैन्द्रो[5] प्रतिरथं जगौ[6]।
आशु[क]रैन्द्रमथादेवी अमीषा[ख]मित्यृचि स्तुता ॥१३॥
चतुर्थी बार्हस्पत्या स्यादावत[ग] प्रवतामिति[7]।
हुवे च[ग] मरुतः प्रे[घ]ति प्रर्व्वेति परमन्तु यत् ॥१४॥
तथानिरुक्तसूक्तादाद्यगेका सूर्य्यमर्चति।
धर्मपरा[8]स्ततस्त्वन्तु सवितारमभी[ङ]ति या ॥१५॥
सूक्तशेषस्य षड्वृचः सूर्य्याचन्द्रमसौ सह।

---

(१) पयमिति ख०, घनमिति ग० घ०।
(२) आजावने तिति ख०, आजीवनस्त्विति पुस्तकान्तरम्।
(३) भार्म्याश्च इति ख० भार्य्यंचेति पुस्तकान्तरम्।
(४) वृषभमिति क० ख० ग०।
(५) इन्द्रः इति पाठः सर्वत्र।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नैवास्ति।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(८) दृषस्त्विति ख०, दृषे तिति ग०।
(९) धर्मपरा इति ख० ग०।

---

(क) ऋ० १०, १०३, १। (ख) ऋ० १०, १०३, १२। (ग) ऋ० १०, १०३, ४।
(घ) ऋ० १०, १०३, १३। (ङ) ऋ० १०, १०३, ७।

तुष्टावेन्द्रमपावी[क]ति अष्टकोऽस्मात् परेण[१] तु ॥१६॥
कौत्सः कदा वसोः [ख]सूक्तं दुर्मित्रो नाम नामतः ।
सुमित्र इति नामास्य[२] गुणार्थमितरं पदम् ॥१७॥
भूतांशस्तु प्रजाकामः कर्माणि कृतवान् पुरा ।
न हि लेभे प्रजाः काश्चित्काश्यपो मुनिसत्तमः ॥१८॥
उवाच भार्या भूतांशं स्तुतानिच्छसि यावतः ।
तावतो जनयिष्यामि देवता ददृशस्तु हि ॥१९॥
तमभ्ययुस्तु सर्वाणि द्वन्द्वानि स्तुतिकाम्यया ।
तान्यवेक्ष्याथ तच्चक्रे[३] नासत्यौ सूक्तभागिनौ ॥२०॥
तदेतदन्ततो भावादाश्विनं सूक्तमुच्यते ।
न ह्यस्मिन्देवतालिङ्गं प्रायेणात्र हि दृश्यते ॥२१॥
सूक्तेन तु परेणात्र स्वयमाविर[ग]भूदिति ।
आत्मानमेव तुष्टाव प्राजापत्याथ[४] दक्षिणा[घ] ॥२२॥
दातॄंश्च स्तुतानेके दक्षिणानां वदन्ति तु ।
दातृत्वाद्दक्षिणानाञ्च भोजाश्चतसृभिः स्तुताः ॥२३॥

(१) अष्टकः परमेणेति क० घ० च० ।
(२) सुमित्रश्चैव नाम स्यादिति क० घ० च० ।
(३) सच्चक्रे इति ख० ।
(४) अथेति ख० ।

(क) ऋ० १०, २०४, १ । (ख) ऋ० १०, १०५, १ । (ग) ऋ० १०, १०७, १ ।
(घ) ऋ० १०, १०७, ५ ।

असुराः पणयो नाम रसापारनिवासिनः[1]।
गास्तेऽपजह्रुरिन्द्रस्य न्यगूहंस्च[2] प्रयत्नतः ॥२४॥
बृहस्पतिस्तथापश्यद्दृष्ट्वेन्द्राय शशंस च।
प्राहिणोत्तत्र दूतीन्तु[3] सरमां पाकशासनः ॥२५॥
कि(क)मित्यचायुजाभिस्तां पप्रच्छुः पणयोऽसुराः।
कुतः कस्यासि कल्याणि किं वा कार्य्यमिहास्ति ते ॥२६॥
अथाब्रवीत्तां सरमा दूत्यैन्द्री विचराम्यहम्।
युष्मान् व्रजांश्चान्विष्यन्ती[4] ऐन्द्रीर्गाश्चैव पृच्छति ॥२७॥
विदित्वेन्द्रस्य दूतीनामसुराः पापचेतसः।
ऊचुर्मा सरमे गास्त्वमिहास्माकं स्वसा भव ॥२८॥
सूक्तस्य चान्यया चर्चा[5] युष्माभिस्त्वेव सर्वशः।
साब्रवीन्नाह(ख)मिच्छामि स्वसृत्वं वा धनानि वा ॥२९॥
पिबेयं[6] तु पयस्तासां गवां यास्ता निगूहथ।
असुरास्तां तथेत्युक्त्वा तदाजह्रुः पयस्ततः ॥३०॥

---

(१) सिन्धुपारनिवासिनः इति ख०।
(२) निगूहस्त्वेति क० घ० च०।
(३) दूत्येऽर्थेति ख० ग०।
(४) विधूय वः सर्व्वा इति क० घ० च०।
(५) सूक्तस्यान्त्यपर्य्येति क० घ० च०।
(६) पिबामीति क० घ० च०।

---

(क) ऋ० १०, १०८, १। (ख) ऋ० १०, १०८, १०।

सा स्वभावाच्च लौल्याच्च पीत्वा तत्(१) पय आसुरम्।
वरं(२) संवननं हृद्यं बलपुष्टिकरं ततः ॥२१॥
शतयोजनविस्तारामतरत्तां रसां पुनः।
यस्याः पारेऽपरे तेषां पुरमासीच्च दुर्ज्जयम् ॥२२॥
पप्रच्छेन्द्रश्च सरमां कच्चिद्गा दृष्टवत्यसि।
सा नेति प्रत्युवाचेन्द्रं प्रभावादासुरस्य हि(३) ॥२३॥
तां जघान तदा क्रुद्ध उद्गिरन्ती पयस्ततः।
जगाम सा भयोद्विग्ना पुनरेव पणीन् प्रति ॥२४॥
पदव्यास्तस्य पद्युक्त्या रथेन हरिवाहनः।
गत्वा जघान च पणीन् गाश्च ताः पुनराहरत् ॥२५॥
तेऽवदन्(क) वैश्वदेवन्तु जामदग्न्यस्तथाप्रियः(४)।

(१) चेति क॰ ख॰ घ॰।
(२) पयः इति ग॰।
(३) त्विति क॰ ग॰ घ॰ च॰।
(४) ख॰ चिह्नितपुस्तके एतच्छ्लोकार्द्धं न विद्यते। तत्र कस्मिन् ग्रन्थे,
ते च तं वैश्वदेवं स्यात् प्रगाथाया शुक्रर्गमौ।
यामदग्निश्चमिद्धाज्यो प्रियस्तुक्रामतः परं।
प्रजन्त युगपत् सर्व्वे वैरूपाकं त्रिभिः परैः।
इति पाठो वर्त्तते।

(क) ऋ॰ १०, १०८, १।

युगपद्दे प्रजन्तं तं[१] वैरूपा व्यग्रयस्तयः ॥२६॥
इन्द्रं प्रति जगुः सूक्तैः पणीन् प्रतिजिगीषिणम्[२]।
वैश्वदेवं परं सूक्तं घर्म्मे[क]त्येके च तु सुतान् ॥२७॥
देवानिन्द्रं च मन्यन्ते च्छन्दांस्यग्निं[३] च मध्यमम्।
आग्नेयं चित्र[ख] इत्येतज्जगादर्षिरुपस्तुतः ॥२८॥
पिबे[ग]न्द्रं स्तौति ने[घ]त्यन्तं रक्षोघ्नाग्नेयमुत्तरम्[४]।
इति वै[ङ] मावदैन्द्रं न[च]दाख्याः षष्ठ्यां निपातिताः[५] ॥२९॥
प्राजापत्यमथाग्नेयं वैन्यमित्यनुपूर्व्वशः।
वरुणेन्द्राग्निसोमानां[६] मिमं न[छ] इति संस्तुतिः[७] ॥४०॥
चतस्रस्त्वथ सूक्तादावग्निरात्मस्तवं जगौ।
स्तुतः सोमस्तु षष्ठ्या च नवम्या[८]श्च पदैस्त्रिभिः ॥४१॥

---

(१) प्रतं तन्त्रिवात क० घ० च०।
(२) प्रतिमनौषिणः इति ख०।
(३) छन्दांस्यग्निमिति ख०।
(४) आग्नेयन्तु परं ततः इति क० घ० च०।
(५) यथाच संस्तुतः इति ख०।
(६) सोमाग्निवरुणानानिवति क० घ० च०।
(७) संस्तवः इति ख० ग०।
(८) नवम्यामिति ख०, नवम्येति ग०।

---

(क) ऋ० १०, ११४, १। (ख) ऋ० १०, ११५, १। (ग) ऋ० १०, ११६, १। (घ) ऋ० १०, ११७, १। (ङ) ऋ० १०, ११९, १। (च) ऋ० १०, १२०, १। (छ) ऋ० १०, १२४, १।

वारुण्यस्त्वितरास्तिस्र[१] इन्द्र[क]मेवोत्तमं पदम्[२] ।
अहं[ख] वाक्सूक्तमर्य्यम्णो मित्रस्य वरुणस्य च ॥४२॥
न तं[ग] राज्ञः परं सूक्तं वैश्वदेवं मन्ये[घ]ति यत् ।
नमस्ते वैद्युतं सूक्तं त्वाशीर्वादः परन्तु तत्[३] ॥४३॥
याङ्क्ष्यपयन्ति नोऽरयः कृत्वा[४] नात्मनमात्मनः[५] ।
हिरण्यस्तुतिरायुष्यं नाम[ङ]य[६]त्परमेष्ठिनः ॥४४॥
वदन्ति भाववृत्तं तद्यो यज्ञ[च] इति चोत्तरम्[७] ।
अपे[छ]न्द्रमच त्वाश्विन्यौ चतुर्थी पञ्चमी स्तते[८] ॥४५॥
मैत्रावरुणमीशान[ज] प्रथमायामृचि स्तुता[९] ।
अर्धर्चे द्यौश्च भूमि[१०]श्च आश्विना चोत्तरे ततः[११] ॥४६॥

---

(१) त्वर्चेति ग० ।
(२) उत्तमा ऋगाविति ग० ।
(३) यदिति ख० ।
(४) कृत्वामिति ग० ।
(५) नतिं कृत्वा दैवतमुच्यते इति [illegible]० ।
(६) नेति यदिति क० घ० च० ।
(७) उत्तरन्तस्य चैव वदिति क० ग० च० ।
(८) च येति ख० ।
(९) स्तुताः इति ख० ग० ।
(१०) पूर्वेति ख० ।
(११) आश्विनौ चोत्तरे ततः इति क० ग० घ० च०, उत्तरेषु त्विति ख० ।

---

(क) ऋ० १०, १२०, ९ । (ख) ऋ० १०, १२५, १ । (ग) ऋ० १०, १२६, १ । (घ) ऋ० १०, १२८, १ । (ङ) ऋ० १०, १२९, १ । (च) ऋ० १०, १३०, १ । (छ) ऋ० १०, १३१, १ । (ज) ऋ० १०, १३२, १ ।

प्रोख्वे[क]न्द्रं वैश्वदेव्यृक् तु नकिर्देवा मिनीमसि[ख] ।
यस्मिन् दृच [ग]इति तस्मिन् द्युस्थाने स्तूयते यमः ॥४७॥
केष्वग्निं [घ]केशिनः सूक्त स्तुत देवाः [ङ]परन्तु यत् ।
देवानामत्र वाद्या स्यादाद्यस्त्वृच उत्तरः[१] ॥४८॥
चायन्तां [च]वैश्वदेव्यृक् तु प्रैषस्त्वन्देवतः परः[२] ।
स्यादे त[३]दिव्यभैषज्यं रपसो वा विनाशनम्[४] ॥४९॥
भूमिलोचा परं सूक्तं तवे[छ]न्द्रं सूक्तमुत्तरम् ।
सूर्यरश्मि[ज]रिति तस्मिन् सावित्रः प्रथमस्त्वृचः ॥५०॥
आत्मा स्तुतः परोक्ष[५]स्तु गन्धर्व्वेणोत्तरे दृचे ।
इन्द्रो वैष[६]निपातेन अथ वा सूर्य्य उच्यते ॥५१॥
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिता. ।
आग्नेयं त्वग्ने[झ] तवे तु अग्ने अच्छे[ञ]ति यत्परान्[७] ॥५२॥

---

(१) ऋगाद्या तस्य देवाना वाते देवस्तत्र पर इति ख० ।
(२) स्तत ख० ।
(३) स्यादेतद्दिवि ग० ।
(४) रपसश्चापनोदनमिति ख० ।
(५) परोक्षमिति ख० ।
(६) चैवेति ख० ।
(७) एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ० १०, १३३, १ । (ख) ऋ० १०,१३४,७ । (ग) ऋ० १०,१३५,१ ।
(घ) ऋ० १०,१३६,१ । (ङ) ऋ० १०, १३७,१ । (च) ऋ० १०,१३७,५ ।
(छ) ऋ० १०, १३८, १ । (ज) ऋ० १०, १३९,१ । (झ) ऋ० १०,१४०, १ ।
(ञ) ऋ० १०, १४१, १ ।

आग्नेयं वैश्वदेवञ्च मम(क)मित्यत्र तु द्व्यृचाः(१)।
गार्ह्यांस्त्वार ऋषयो अग्निमार्चन् पृथक् पृथक् ॥५२॥
आश्विनं त्यं चि(ख)दित्येतदय(ग)मैन्द्रं ततः परम्।
इमां खनामी(घ)ति सूक्तमिन्द्राणी यत्स्वयं जगौ ॥५४॥
तदौपनिषदं सूक्तं भाववृत्तं प्रचक्षते।
(२)अरण्यानी(ङ)त्यरण्यान्याः स्तुतिरैन्द्रे तदुत्तरे ॥५५॥
सावित्रं सविता यन्त्रैः(च) समिद्धश्चित् समिध्यसे(छ)।
आग्नेयं श्रद्धया(ज) श्राद्धं मेधासूक्तमतः परम् ॥५६॥
आग्नेयमासुरित्यस्माच्छास(झ) ऐन्द्रे ततः परे।
सोम एकेभ्य(ञ) इत्येतद्भाववृत्तं प्रचक्षते(३) ॥५७॥

---

(१) तृचाः इति ग॰।
(२) ख॰ चिह्नितपुस्तके अरण्यानीति श्लोकात् प्राक्, उत्तरानपर्णां पाठान्तु स्तौति सूक्ते महौषधिम्। पतिसंवननीं त्वं पाम्नाः सपत्नापनोदिकाम्। इत्यधिकं पठितम्।
(३) वदन्ति त्विति ख॰।

---

(क) ऋ॰ १०, १२८, १। (ख) ऋ॰ १०, १४३, १। (ग) ऋ॰ १०, १४४, १। (घ) ऋ॰ १०, १४५, १। (ङ) ऋ॰ १०, १४६ १। (च) ऋ॰ १०, १४९, १। (छ) ऋ॰ १०, १५०, १। (ज) ऋ॰ १०, १५१, १। (झ) ऋ॰ १०, १५२, १। (ञ) ऋ॰ १०, १५४, १।

शौनको वैश्वदेवन्तु मन्यते शाकटायनः ।
सूक्तेऽस्मिन् देवतास्त्विह एता एव प्रकीर्त्तिताः[1] ॥५८॥
यद्रायी[क]त्यलक्ष्मीघ्नं तच्च चत्तो[ख] इति द्वृचे ।
प्राधान्याद्वा निपाताद्वा स्तूयते ब्रह्मणस्पतिः ॥५९॥
इन्द्रस्यैव य[ग]दित्यस्यां विश्वेदेवाः परौ[घ] त्वृचि ।
आग्नेयं चाग्नि[2][ङ]मित्येतद्वैश्वदेवमिमा नु कम्[च] ॥६०॥
इन्द्रः प्राधान्यतस्त्वत्र[3] विश्वैर्देवैः सह स्तुतः ।
आदित्यैश्च मरुद्भिश्च तथारूपं हि दृश्यते ॥६१॥
सूर्य्या न[छ] इति सौर्य्यन्तु यत्त्वेतदुदसा[ज]विति ।
पौलोमी स्वान् गुणांस्तत्र सपत्नीनां प्रशंसति ॥६२॥
ऐन्द्रं[4] तौभस्य[झ] मुञ्चामि[ञ] भैषज्यं यक्ष्मनाशनम् ।
राजयक्ष्महनं सूक्तं प्राजापत्यं तदुच्यते ॥६३॥
ऐन्द्राग्नं मन्यते यास्क एके लिङ्गोक्तदैवतम् ।

---

(१) शौनको वैश्वदेवन्त्वित्यादि एता एव प्रकीर्त्तिता इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।
(२) त्वग्निमिति ख॰ ।
(३) प्रधानतो वात्रेति ख॰ ।
(४) इन्द्रमिति ख॰ ।

---

(क) ऋ॰ १०, १५५, १ । (ख) ऋ॰ १०,१५५,२ । (ग) ऋ॰ १०,१५५,४ ।
(घ) ऋ॰ १०, १५५, ५ । (ङ) ऋ॰ १०,१५६,१ । (च) ऋ॰ १०,१५७,१ ।
(छ) ऋ॰ १, १५८, १ । (ज) ऋ॰ १०,१५९, १ । (झ) ऋ॰ १०, १६०, १ ।
(ञ) ऋ॰ १०, १६१, १ ।

गर्भसंस्रवसंयुक्तं(१) यत्तेतद्ब्रह्मणे(क)ति तु ॥६४॥
स्रवतामपि गर्भाणां दृष्टन्तदनुमन्त्रणम् ।
वैन्यन्तु वेनस्तत्पश्य(२) दक्षीभ्यां(ख) यक्ष्मनाशनम् ॥६५॥
दुःस्वप्नघ्नमपेही(ग)ति निपातीन्द्रोऽग्निरेव तु ।
आसीदृषि(३)र्दीर्घतपाः(४) कपोतो नाम नैर्ऋतः ॥६६॥
चक्रे(५)कपोतस्तस्याख्यामग्निधाने पदद्विज ।
स त(६)मात्महितैर्वाक्यैः कपोतं स्तुतवानृषिः(७) ॥६७॥
देवा (घ)इति तु सूक्तेन प्रायश्चित्तार्थमुच्यते ।
ऋषभं मा(ङ) सपत्नघ्नं येनेदमिति मानवम् ॥६८॥
तुभ्ये(च)त्यृषी ददृशतुरैन्द्रं गाथिनभार्गवौ ।
वरुणो विधातानुमतिर्धाता सोमो बृहस्पतिः ॥६९॥
षडेता देवतास्तत्र तृतीयायामृचि स्तुताः ।
वातस्ये(छ)ति परेणास्तौदनिलं पितरं स्वकम् ॥७०॥

(१) रक्षोघ्नमेवमित्युक्तमिति ख० ग० ।
(२) अपध्वसदित्यर्थे पयसदित्यार्षः । भावस्तं पदस्त्वेवमिति ख० ।
(३) आशीविषः इति ख० ।
(४) दीप्ततपाः इति क० ग० घ० ।
(५) अकरोदिति क० ग० घ० ।
(६) प्रतमिति ख०, स्तुतमिति ग० ।
(७) कपोतो नैर्ऋतस्तदेति क० ख० ग० घ० ।

(क) ऋ० १०, १६२, १ । (ख) ऋ० १०,१६३,१ । (ग) ऋ० १०,१६४,१ ।
(घ) ऋ० १०, १६५, १ । (ङ) ऋ० १०,१६६, १ । (च) ऋ० १०,१६७,१ ।
(छ) ऋ० १०, १६८, १ ।

मयो भू[क]रिति यत्सूक्तमपश्यच्छबर[१] ऋषिः।
नानारूपाः पयस्विन्यो गावस्तत्र तु संस्तुताः ॥७१॥
विभ्राट्[ख] सौर्यन्त्वन्य[ग]मैन्द्रन्त्वायाही[घ]त्युषसः स्तुतिः।
आ त्वा[ङ]राज्ञेऽभिषिक्ताय[२]द्वे सूक्ते चानुमन्त्रणे ॥७२॥
प्र व [च]इत्युत्तरं यावर्णं ददर्श स्तुतिमार्बुदिः[३]।
यत्नतः[४] परमाग्नेयं तथाभ्यूक् प्रसूनवः[छ] ॥७३॥
ऋषिर्जगौ पतङ्गस्तु पतङ्ग[ज]मिति यत्परम्।
तत्सौर्यमेके मन्यन्ते मायाभेदं तथापरे ॥७४॥
मायाभेदे द्वितीयायां वाक् स्तुतेत्याह शौनकः।
देवी विभ्रमति मनसापा वाचा विदितां सती[५] ॥७५॥
त्यमू ष्वि[झ]ति तु सौपर्णं[६] सूक्तं स्वस्त्ययनं विदुः।
उ[ञ]देन्द्रं वैश्वदेवन्तु प्रयस्वे[ट]ति च यत्परम् ॥७६॥

---

(१) शभरः इति क० ग० घ०।
(२) अभिषिक्तस्येति ख०।
(३) चार्बुदः इति ख०।
(४) यवत इति क० ग० घ०।
(५) मायाभेदे द्वितीयायामित्यादि मा वाचा विदितां सतीत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(६) तार्क्ष्यदैवत्यमिति ख०।

---

(क) ऋ० १०, १६९, १। (ख) ऋ० १०,१७०,१। (ग) ऋ० १०, १७१,१। (घ) ऋ० १०, १७२, १। (ङ) ऋ० १०,१७३, १। (च) ऋ० १०,१७५,१। (छ) ऋ० १०, १७६, १। (ज) ऋ० १०,१७७,१। (झ) ऋ० १०,१७८,१। (ञ) ऋ० १०, १७९, १। (ट)। ऋ० १०, १८१, १।

आत्मप्रभावमाचख्युस्तचाया ऋषयस्त्रयः ।
रथन्तरं यथा स्तोत्रं स्तोत्रञ्चैव यथा बृहत् ॥७७॥
यथा च सम्भृतो घर्मः सवितुश्चोपलक्ष्यते[१] ।
बृहस्पति[क]रिति तस्मिन् स्तुतः सूक्ते बृहस्पतिः ॥७८॥
आशिषो यजमानस्य केचिदेतां स्तुतिं विदुः[२] ।
प्राजापत्यस्य यत् सूक्तमपश्यं त्वा[ख]प्रजावतः ॥७९॥
प्रत्यृचं देवता स्तौति लिङ्गैरेवाच देवताः[३] ।
आशिषः पुत्रकामस्य प्रथमा हि वदत्यथ ॥८०॥
द्वितीया पुत्रकामायास्तृतीयात्मस्तव[४]स्तृचः ।
यद्विष्णु[ग]रिति सूक्तन्तु वैश्वदेवं प्रपद्यते ॥८१॥
तस्मिन् स्वदारगर्भार्थमृषिराशास्त आशिषः ।

---

(१) वारश्चैवाच दृश्यते इति क॰ घ॰ च॰ ।
(२) बृहस्पतिरिति तस्मिन्नित्यादि केचिदेतां स्तुतिं विदुरित्यन्तपाठः ख॰ चिह्नितपुस्तके न विद्यते । तत्र अस्मिन् स्थले, सूक्तेऽस्मिन् देवतास्तिस्रः स्तुता अत्र प्रकीर्तिता इति श्लोकार्द्धं वर्त्तते ।
(३) स्ववाग्भिश्चिताः इति ख॰, अयं श्लोकः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।
(४) आत्मस्तवमिति ग॰ ।

---

(क) ऋ॰ १०, १८२, १ । (ख) ऋ॰ १०, १८३, १ । (ग) ऋ॰ १०, १८४, १ ।

परन्तु(१) नेजमेषं हि(२) गर्भार्थं ताव(३)दुच्यते ॥८२॥
माहित्रं यन्महि त्रीणा(क)मादित्यानां स्तुतिं विदुः(४)।
सूर्यवरुणमित्राणामादित्येष्वितरेषु तु(५) ॥८३॥
एत(६) एव त्रयो वाता सुताः स्वस्त्येव्व(७)तोऽन्यथा।
शान्त्यर्थं सूक्तमेतद्धि पावनं चैव विश्रुतम् ॥८४॥
पातमपि स्वस्त्ययने दृष्टं तदनुमन्त्रणम्(८)।
उतोऽस्तौत्पितरं वातमाग्नेयं प्राग्नये(ख) परम् ॥८५॥
विसष्टं जातवेदस्यं प्रे(ग)ति दाग्नतयीषु(९) तु।
यत्किञ्चिदैव ला(१०)ग्नेयं जातवेदस्यमुच्यते॥८६॥
आयन्नौ(घ)रिति यत्सूक्तं सार्पराज्ञी(११)स्वयं जगौ।

(१) परे त्विति ख०।
(२) नेजमेषेतीति ख० ग०।
(३) वा तदि क० घ० च०।
(४) आदित्येष्वितरेषु त्विति क० घ० च०।
(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेह्यते।
(६) एत इति क० घ० च०।
(७) ह्यस्येष्विति ख०।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(९) दाशतयीष्विति ख०।
(१०) अन्यत्रेति ख० ग०।
(११) सर्पराज्ञीति क० घ० च०।

(क) ऋ० १०, १८५, १। (ख) ऋ० १०, १८७,१। (ग) ऋ० १०,१८८,१।
(घ) ऋ० १०, १८९, १।

तस्मात् सा देवता(१) तत्र सूर्य्यमेके प्रचक्षते ॥८७॥
मुद्गलः शाकपूणिश्च आचार्य्यश्च रथीतरः(२)।
त्रिस्थानाधिष्ठितां वाचं मन्यन्ते प्रत्यृचं स्तुताम् ॥८८॥
भाववृत्तपर(३) सूक्तं ददर्शायाघमर्षणः।
परं न विद्यते तस्मात्स्वाध्याये वा पावनाय वा ॥८९॥
यथाश्वमेधः क्रतुराट् सर्व्वरिप्रप्रणोदनः(४)।
तथाघमर्षणं ब्रह्म सर्व्वरिप्रप्रणोदनं(५) ॥९०॥
तदादीनि(६) च यज्ञातः संज्ञानं ज्ञानसंस्तवः।
चतुर्थं यत्तु नैर्हस्त्यं तत्सपत्ननिवर्हणम्(७) ॥९१॥
संसमित्(क) माध्वराण्याद्वेत्याग्नेये एव ते स्मृते(८)।

---

(१) तस्य स्याद्देवतेति क॰ ख॰ ग॰ घ॰।
(२) आचार्य्यः शाकटायन इति ख॰ ग॰।
(३) भाववृत्तम्तमिति क॰ ग॰ घ॰।
(४) सर्व्वरीप्रप्रणोदन इति ख॰।
(५) यथाश्वमेधः क्रतुराट् इत्यादि सर्व्वरिप्रप्रणोदनमित्यन्तपाठः क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नापलभ्यते।
(६) त्यदादीनीति क॰ ग॰ घ॰।
(७) चतुर्थस्त्वैर्हस्त्य यत्तत्सपत्नीनिवर्हणमिति क॰ ग॰ घ॰।
(८) उभे तथाग्निदेवते इति क॰ ग॰ घ॰।

---

(क) ऋ॰ १०, १९१, १।

उशना वरुणश्चेन्द्रश्चाग्निश्च सविता स्मृताः ॥८२॥
संज्ञानं प्रथमस्या[१]न्तु द्वितीयस्यामथाश्विनौ[२]।
तृतीया चोत्तमे च द्वे आशिषोऽभिवदन्ति ताः[३] ॥८३॥
इन्द्रः पूषा सपत्नघ्ने द्वितीयस्यामृचि स्तुतौ।
देवानामितराः प्रोक्ता आशीर्व्वादपराश्च याः[४] ॥८४॥
[५]महानाम्न्य ऋचो गुह्यास्ता ऐन्द्र्यश्चैव यो वदेत्।
सहस्रयुगपर्य्यन्तं सोऽहं ब्रह्म स राध्यते[६] ॥८५॥
[७]पुरीषपदमासान्तु प्रथमं स्यात्प्रजापतेः[८]।

---

(१) प्रथमायामिति पाठ शुद्धः।
(२) उशना वरुणश्चेन्द्रइत्यादि द्वितीयस्यामथाश्विनावित्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) स त्वाशीर्व्वाद उच्यते इति क० घ० च०।
(४) एष श्लोकः क० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(५) ख० चिह्नितपुस्तके महानाम्न्य इति श्लोकात्प्राक्, संवसंज्ञानमित्येते श्रेवनमं विदुरिति श्लोकार्द्धं वर्त्तते।
(६) राध्यतीति पाठः साधुः, सोऽहं ब्राह्मः स्वराध्यते इति क० घ० च०, वाच ब्राह्मं स्वरं ध्यास्ते इति ख०।
(७) तमिदेवतमिति ख०।
(८) ख० चिह्नितपुस्तके पुरीषपदमासान्त्विति श्लोकात् प्राक्,—
चिषाधर्म्मयाश्चिकाः सूक्तानाच्च-
र्कस्मिन् सवो दृश्यते यः सूक्तभावा।
प्रधानसूक्तं किल देवतायाः
सूक्तभागः सर्व्वदा शौनकेन॥

आग्नेयमैन्द्रं वैष्णवं पौष्णं दैवन्तु पञ्चमम्[1] ॥९६॥
अग्नेः प्रयाजानुयाजाः प्रैषा ये च[2] हवींषि च ।
यद्दैवत हविस्तु स्यात्प्रैषास्तद्देवतास्तु[3] ते ।९७॥
निविदां निगदानाञ्च स्वै स्वैर्लिङ्गैश्च देवता[4] ।
निगदेन[5] निगद्यन्ते याश्च कल्पानुगा ऋचः ॥९८॥
अग्नेरेव तु गायत्र्य उष्णिहः[6] सवितुः स्मृताः ।
अनुष्टुभस्तु सोमस्य बृहत्यस्तु बृहस्पतेः ॥९९॥

---

ऐन्द्रा ऋचो महानाम्नीस्तु विद्या
सप्त हि दृष्ट ब्राह्मणसूक्तमध्ये ।
न दृश्यते सूक्तमध्ये न विद्यु
यथा प्रैषेभ्याद्दाससूक्ताभिधानम् ।

सूक्तैकदेशा इति तान् प्रतीया-
दन्याश्च कुन्त्यां पदशो निगद्या ।
यथैतस्यो देवि निपादि सख्या
मुन्तापे तत्सर्वमेक सूक्तम् ।

इत्यधिकपाठोऽस्ति

(१) विन्द्र त्वा वैष्णवश्चैव पौष्णश्चैव मत परमिति ख० ।
(२) रुचेति क० घ० च० ।
(३) चेति ख० ।
(४) लिङ्गोक्तदेवता इति क० घ० च० ।
(५) निगदैस्त्विति ख० ।
(६) उष्णिक इति ख०, उष्णिहेति ग० ।

पङ्क्तयस्त्रिष्टुभश्चैव विद्यादैन्द्र्यश्च सर्व्वशः।
विश्वेषां चैव देवानां जगत्यो याश्च काश्चन ॥१००॥
विराजश्चैव मित्रस्य स्वराजो वरुणस्य च।
विषये यस्य वा स्यातां स्यातां वा वायुदेवते ॥१०१॥
इन्द्रस्यातिधृतिः प्रोक्ता वायोश्च भूरिजः स्मृताः(१)।
यास्त्वतिच्छन्दसः काश्चित्ताः प्रजापतिदेवताः(२) ॥१०२॥
विच्छन्दसस्तु-वायव्या मन्त्राः पादैश्च ये मिताः।
पौरुषा द्विपदाः सर्व्वा ब्राह्म्य एकपदाः स्मृताः(३) ॥१०३॥
समस्ता एव चाग्नेय्यो वायव्यानि यजूंषि च।
सौर्य्याणि चैव सामानि सर्व्वाणि ब्राह्मणानि च ॥१०४॥
वैश्वदेवो वषट्कारो हिङ्कारो ये यजामहे।
रूपं वज्रस्य वाक्पूर्व्वं स्वाहाकारोऽग्निदेवतः ॥१०५॥
देवानाञ्च पितृणाञ्च नमस्कारः स्वधैव(४) च।
क्रुष्टो मूर्द्धनि विज्ञेयस्तालव्यः प्रथमः स्वरः ॥१०६॥
द्वितीयस्तु भ्रुवोर्मध्ये तृतीयः कर्णसंश्रितः।
चतुर्थो नासिकाग्रे स्यादौरस्यो मन्द्र उच्यते ॥१०७॥

---

(१) एतच्छ्लोकार्द्धं क॰ ख॰ घ॰ चिह्नितपुस्तकेषु न पठितम्।
(२) एतच्छ्लोकार्द्धं ख॰ चिह्नितपुस्तके न दृश्यते।
(३) द्विपदा पौरुषं छन्दो ब्राह्मी त्वेकपदा स्मृताः इति ख॰।
(४) तथैवेति ख॰।

मन्द्रकर्षणसंयुक्तमतिस्वारं प्रशंसति[१]।
वदन्ति देवताः क्रुष्टं मनुष्यास्त्वितरैस्त्रिभिः[२] ॥२०८॥
द्वितीयं वसवः[३] सर्व्वे गन्धर्वाप्सरसः स्वरम्।
अण्डजाः पक्षिणः सर्पाश्चतुर्थमुपभुञ्जते[४] ॥१०९॥
मन्द्राः पिशाचा रक्षांसि असुराश्चोपभुञ्जते[५]।
अतिस्वार[६]स्तु प्रेयस्य जङ्गमस्थावरस्य च ॥११०॥
वैश्वदेवस्वरः क्रुष्टो नित्यं यो मूर्द्ध्नि तिष्ठति[७]।
तालव्यः प्रथमः साम्नां स्वर आदित्यदैवतः[८] ॥१११॥
स्वरो द्वितीयः साध्यानां भ्रुवोर्मध्यश्रितश्च यः[९]।
आश्विनस्तु[१०] तृतीयोऽत्र स्वरः कर्णसमाश्रितः ॥११२॥
चतुर्थस्तत्र[११] वायव्यो नासिक्यः स्वर उच्यते।

---

(१) तु तं विदुरिति ख॰।
(२) सर्व्वा मनुष्याः प्रथमं स्वरमिति ख॰।
(३) पशवः इति ख॰ ग॰।
(४) सुपभुज्यते इति क॰ घ॰ च॰, चतुर्थश्चोपभुञ्जते इति ख॰।
(५) एतत्पृष्ठोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(६) अतिस्वार्य्यः इति क॰ घ॰ च॰, अतिसार इति ख॰।
(७) ख॰ चिह्नितपुस्तके, वदन्ति देवताः क्रुष्टमित्यादि नित्यं यो मूर्द्धि तिष्ठतीत्यन्तं, द्वितीयस्तु भ्रुवोर्मध्ये इति श्लोकात् प्राक् पठितं।
(८) चेदन्त्य यत्र लिति क॰ घ॰ च॰।
(९) देशं समाश्रितः इति ख॰ ग॰।
(१०) आग्नेयस्त्विति क॰ घ॰ च॰।
(११) तेषु इति क॰ घ॰ च॰।

पञ्चमस्तु स्वरः प्रोक्तश्चातुर्थः सूर्य्यदैवतः[१] ॥११३॥
यस्तु सामस्वरः षष्ठः[२] स सौम्यो मन्द्र उच्यते।
विकर्षेण तु मन्द्रस्य[३] युक्तोऽतिस्वार्य्य उच्यते ॥११४॥
स मैत्रावरुणो ज्ञेयो मन्द्रस्थानसमाहितः[४] ॥
सामस्वराणां सप्तानामेते देवा इहोदिताः[५] ॥११५॥
षयाणामितरेषां तु लोकाधिपतयस्त्रयः।
वाग्दैवत्योऽथ वाग्नेयः प्रस्तावस्यैव सामसु ॥११६॥
उद्गीथापद्रवावैन्द्रौ स्यातां वा वायुदैवते।
सौर्य्यः स्यात्प्रतिहारोऽत्र निधनं वैश्वदेवतम् ॥११७॥
हिङ्कारप्रणवाभ्यान्तु पुरस्तादेव कीर्त्तनात्।
इति व्यस्तसमस्तानां मन्त्राणामिह दैवतम्।
देवताविद्विवेचेत प्रयोगे सर्व्वकर्म्मणाम् ॥११८॥

सप्तर्षयो वसवश्चापि देवा
अथर्व्वाणो भृगवः सोमसूर्य्याः[६]।

---

(१) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नापश्यत।
(२) कुष्ट इति क० घ० च०।
(३) कर्षणेनैव मन्द्रस्येति क० घ० च०, विकर्षेन तु मन्द्रस्येति ख०।
(४) मन्द्रस्थानसमाहितः इति क० घ० च०, मन्द्रस्थानसमाश्रि ष-ङिति ग०।
(५) इति स्वराणां सप्तानामुक्ताः सामसु देवताः इति क० घ० च०।
(६) पंशोऽथर्वमा इति क० घ० च०।

पथ्यास्वस्ती रोदसी चोक्तमन्त्रे
कुहूर्गुङ्गुरदितिर्धेनुरघ्न्या ॥११९॥
असुनीतिरिला वा द्यौः(१) विधातानुमतिर्दया ।
वैश्वानरो हि(२) सहैताः स्युरुक्तमन्त्राश्च देवताः ॥१२०॥
प्रजापतिर्गौः सुधन्वा नगोध(३) पूर्णा विवस्वान्
अपां नपादर्य्यमा वातजूति-
रिडस्पतिश्चैव रथस्पतिश्च ॥१२१॥
ऋभवः पर्ज्जन्यः पर्व्वताग्नाश्च(४) पत्नी-
र्दंचो भगो(५) देवपत्नीर्दिशश्च ।
आदित्या रुद्राः पितरोऽथ साध्या
निपातिनो वैश्वदेवेषु सर्व्वे ॥१२२॥
अनुक्रान्ता देवताः सूक्तभाजो
हविर्भाजश्चोभयथा निपातैः ।
अथैवं स्यादुभयथान्यथा वा
न प्रत्यक्षमनृषेरस्ति मन्त्रः ॥१२३॥

---

(१) स्यादिति ख॰ ग॰ ।
(२) द्यौः सुधन्वा गोऽघ्न्य इति क॰ घ॰ च॰, न नद्य॰ इति ग॰ ।
(३) अपोति ख॰ ग॰ ।
(४) वा गावश्चेति क॰ घ॰ च॰ ।
(५) भर्गा इति ग॰ ।

योगेन दाक्ष्येण दमेन बुद्ध्या
बाहुश्रुत्येन तपसा नियोगैः[1]।
उपास्त्याः[2] कृत्स्नशो देवता या[3]
ऋचो ह यो वेद स वेद देवान्।
यजूंषि यो वेद स वेद यज्ञान्
सामानि यो वेद स वेद तत्त्वं॥१२४॥

अष्टौ मे पुत्रकामाया अब्दादूर्ध्वं च त[4]त्कृतम्।
आग्नियो योगमेतं हि वाङ्गौ गोर्येन[5] मन्यते॥१२५॥
एकारमनुकम्पार्थं नास्मि स्मरति माठरः।
आख्यातभूतकरणं[6] वाक्कुला स्त्री व्ययो स्तन॥१२६॥
मन्त्राणां देवताविद्यः प्रयुङ्क्ते कर्म कर्हिचित्।
जुषन्ते देवतास्तस्य[7] हवि[8]र्वा[9]देवताविदः॥१२७॥
अविज्ञानप्रदिष्टं[10] हि हविर्नाश्नन्ति देवताः।

---

(१) अभियोगैरिति ख०।
(२) उपास्यास्याः इति ख० ग०।
(३) दैवतस्येति क० घ० च०।
(४) स वागर्द्धेन यदिति क० घ० च०।
(५) वज्रो यौर्येन्मिति ख०।
(६) आख्याते भूतकरणमिति ख०।
(७) स्यस्येति ग०।
(८) वपिर्व्वेति ख०।
(९) नेति क० ग० घ० च०।
(१०) अविज्ञातप्रदिष्टमिति क० घ० च०।

तस्मान्मनसि संन्यस्य देवता जुहुयाद्धविः ॥१२८॥
स्वाध्यायमेव[१] योऽधीते मन्त्रदैवतविच्छुचिः ।
स सत्रसदिव [२]स्वर्गं सत्रसद्भिरपीज्यते[३] ॥१२९॥
नियमोऽयं जपे होमे ऋषिश्छन्दोऽथ दैवतम् ।
अन्यथा चेत् प्रयुञ्जानस्तत्फलाच्चाव हीयते ॥१३०॥
ऋषिच्छन्दोदैवतादिज्ञानं यज्ञादिषु श्रुतम् ।
तदाश्रित्य प्राग्दृष्टिर्विहिताचेति गम्यताम् ॥१३१॥
अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥१३२॥
अर्थेप्सव ऋषयश्छन्दोभिर्देवताः पुरा ।
अभ्यधावन्निति च्छन्दो मध्ये स्वाऽऊर्मेहर्षय. ॥१३३॥
ऋषिन्तु प्रथमं ब्रूयाच्छन्दस्तु तदनन्तरम् ।
देवतामथ मन्त्राणां कर्मस्वेवमिति श्रुतिः ॥१३४॥
आत्मय वा अनात्मस्थ[४] विविच्यात्मानमात्मनि ।
ईक्षमाणो ह्युभौ सन्निस्थो दैवतवित्पठेत् ॥१३५॥
स ब्रह्मामृतमत्यन्तं योनिं सदसतोर्ध्रुवम् ।
महद्वाणु च विश्वेश विशति ज्योतिरुत्तमम् ॥१३६॥

इति शौनकाचार्यकृतायां बृहद्देवतायामष्टमोऽध्यायः ॥

समाप्ता बृहद्देवता ॥

---

(१) उतेति ख॰ ग॰ घ॰ ।
(२) अस्वप्नसदपीति ग॰ ।
(३) अपीष्यते इति क॰ ख॰ घ॰ ।
(४) आत्मान वाप्यनधारमिति ख॰, आत्मान वाप्यनाधारमिति ग॰

श्रीः

# अथार्षानुक्रमणी ।

## प्रथमं मण्डलम् ।

ऋग्वेदमखिलं ये हि द्रष्टारो मुनिपुङ्गवाः ।
तदनुक्रमणायाहं नमामि परमेश्वरीम् ॥१॥
अथाग्निमीळ इत्यादि प्रथमं मण्डलं प्रति ।
शतर्चिनस्तु विज्ञेया ऋषयः सुखसिद्धये ॥२॥
तेषां पूर्व्वो मधुच्छन्दा मेधातिथिरनन्तरः ।
शुनःशेपस्तृतीयोऽयं हिरण्यस्तूप उत्तरः ॥३॥
कण्वस्तु पञ्चमः षष्ठः प्रस्कण्वः सव्य उत्तरः ।
नोधाः पराशरश्चान्यो गोतमः कुत्स उत्तरः ॥४॥
काश्यपस्त्वथ कक्षीवान् परुच्छेपस्तदुत्तरः ।
दीर्घतमास्ततोऽगस्त्यः षोडशैते शतर्चिनः ॥५॥
ऋचां शतानि दृष्ट्वा(क)द्येत एव शतर्चिनः ।
जेतादीनान्तु नचास्ति तस्मान्नैते शतर्चिनः ॥६॥

(क) शतानां दृष्टत्वादिति पाठो भवितुमर्हति ।

तत्र त्वादित आरभ्य सूक्तानां दशकं प्रति।
वैश्वामित्रो[क] मधुच्छन्दा ऋषिरित्यवगम्यताम्॥७॥
इन्द्रं विश्वा(११)[ख] इति यस्य जेता तस्य सुतो मुनिः।
अग्निं दूत(१२)मुपक्रम्य सूक्तद्वादशकं प्रति॥८॥
काण्वो मेधातिथिर्नाम मुनिरित्यवगम्यताम्।
कस्य नून(२४)मुपक्रम्य सूक्तानां सप्तकं प्रति॥९॥
आजीगर्त्तिः शुनःशेप ऋषिरित्यवगम्यताम्।
अयन्तु देवराताख्यो वैश्वामित्रस्य कृत्रिमः॥१०॥
त्वमग्न(३१) इत्युपक्रम्य सूक्तानां पञ्चकं प्रति।
हिरण्यस्तूपनामायमृषिराङ्गिरसः सुतः॥११॥
प्र वो यह्व(३६)मुपक्रम्य सूक्तानामष्टकं प्रति।
घोरस्य पुत्रः कण्वोऽयमृषिरित्यवगम्यताम्॥१२॥
[ग]अभित्यं मेष(५१)मित्यादिसूक्तानां सप्तकं प्रति।
सव्यो हि नामाङ्गिरस ऋषिरित्यवगम्यताम्॥१३॥
नू चित्सहोजा(५८) इत्यादि सूक्तानां सप्तकं प्रति।
गोतमस्य सुतो नोधा ऋषिरित्यवगम्यताम्॥१४॥

---

(क) विश्वामित्र इति घ०।

(ख) (११) चिह्नेनानेन सूक्तसङ्ख्या परिच्छेद्या। एवं परत्रापि। मण्डलसङ्ख्या तु मूलत एवावगम्यताम्।

(ग) अग्ने विवस्वदि(४४)त्यादि सूक्तानां सप्तकं प्रति।
कण्वस्य पुत्रः प्रस्कण्व ऋषिरित्यवगम्यताम्॥
इत्येवं श्लोकोऽस्मात् पूर्वं भवितुमर्हति। सर्वानुक्रमण्यादौ तथैवोपलम्भात्।

पश्वा न तायु(६५)मित्यादिसूक्तानां नवकं प्रति ।
शाक्त्यः पराशरो नाम ऋषिरित्यवगम्यताम् ॥१५॥
उपप्रयन्त(७४) इत्यादिसूक्तानां विंशतिं प्रति ।
राहूगणो गोतमो(क)ऽयमृषिरित्यवगम्यताम् ॥१६॥
इमं स्तोम(९४)मुपक्रम्य सूक्तानां पञ्चकं प्रति ।
कुत्सो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१७॥
जातवेदस(९९) इत्यस्मिन् मारीचः काश्यपो मुनिः ।
स यो वृषे(१००)ति सूक्तस्य ह्यृषयो वार्षागिराः ॥१८॥
ऋज्राश्वः प्रथमस्तेषां भयमानसुराधसौ ।
सहदेवोऽम्बरीषश्च तेऽत्र सूक्ते प्रकीर्त्तिताः ॥१९॥
चन्द्रमा(१०५) इति सूक्तस्य त्रित आप्त्योऽथवा ऋषिः ।
नासत्याभ्या(११६)मुपक्रम्य सूक्तेष्वेकादशस्वथ ॥२०॥
कक्षीवान् दैर्घतमस उशिक्सूनुः स एव च ।
भावयव्यस्तु राजायमृषिरा गधिते(१२६,६)त्यृचः ॥२१॥
तद्भार्य्या रोमशा नामोपोत्तमस्या उपोत्तमे ।
अग्निं होतार(१२७)मित्यादिसूक्तेष्वेव त्रयोदश ॥२२॥
दैवोदासिः परुच्छेपो राजैवायमृषिस्ततः ।
वेदिषदे(१४०)प्रभृतीनां सूक्तानां पञ्चविंशतेः ॥२३॥
दीर्घतमा नामौचथ्य ऋषिरित्यवगम्यताम् ।
कया शुभेतिसंवाद इन्द्रादीनां हि तत्र त ॥२४॥

(क) गौतम इति घ० ।

# अथ तृतीयं मण्डलम्।



सोमस्य मे(१)त्युपक्रम्य तृतीयं मण्डलं प्रति ।
विश्वामित्र इति ज्ञेयः स च गाथिसुतः(क) स्मृतः ॥१॥
ऋषभो द्वे प्र वः(१३) सूक्ते विश्वामित्रसुतो जगौ ।
विपाजसे(१४)ति सूक्ते द्वे कात्योत्कील ऋषिर्जगौ ॥२॥
समिध्यमानो(१७) द्वे सूक्ते वैश्वामित्रः कतो जगौ ।
अग्निं होतार(१९)मारभ्य गाथी नाम स कौशिकः ॥३॥
सूक्तान्यपश्यच्चत्वारि सूक्ते निर्मथिते परे।
देवश्रवोदेववातावृषी एतौ हि भारतौ ॥४॥
कुशिकः सामदि(२१)त्यस्मिन्निषीरथसुतो मुनिः ।
अथवा मण्डलद्रष्टा विश्वामित्रो यथा श्रुतिः(ख) ॥५॥
प्र पर्वताना(२२)मित्यस्मिन् विपाड्छित्येवमादिभिः ।
नदीभिः सह संवादो विश्वामित्रस्योत्तितीर्षोः ॥६॥
अष्टमी दशमी षष्ठी चतुर्थी च नदीवचः ।
शिष्टा या नवसूक्तस्य विश्वामित्रवचांसि ताः ॥७॥
अग्ने प्रयन्धी(२९,१०)त्येतस्यां घोर आङ्गिरसो मुनिः ।

---

(क) गाथीसुतः इति क० ।

(ख) मुनिरिति क० ।

(२९,१०) चिह्नेनानेन सूक्तसङ्ख्या ऋक्सङ्ख्या च अवगन्तव्या। एवं परत्रापि।

निर्द्दिष्टस्य समानेऽपि श्रूयते(क) सा न शस्यते ॥८॥
अभि तष्टेव(१८) सूक्तस्य वैश्वामित्रः प्रजापतिः ।
वाच्यो वा स उभौ वा तौ विश्वामित्रोऽथवा श्रुतेः ॥९॥
इमं महे(५४) उपक्रम्य सूक्तानां त्रितयं प्रति ।
अयमेव ऋषिर्विद्यादुक्तगोत्रः प्रजापतिः ।
भार्गवो जमदग्निर्वा मण्डलान्ते तृचेऽप्यृषिः ॥१०॥

इति तृतीयं मण्डलम् ।

---

(क) शस्यमानेति श्रूयते इति ज० ।

# अथ चतुर्थं मण्डलम्।

त्वां ह्यग्ने सद(१)मित्यादि चतुर्थं मण्डलं प्रति ।
गौतमो वामदेवो(क)ऽयमृषिरित्यवगम्यताम् ॥१॥
अयं पन्थास्तु संवाद इन्द्रादेः सूक्तमत्र तु ।
अयं पन्था(१८) इति त्वस्या ऋच इन्द्रः स्वयं मुनिः ॥२॥
वामदेवस्तु पञ्चानामर्द्धर्चानां ततः परम् ।
न हि न्वस्या(१८,४)दित्यन्नानामर्द्धर्चाना तथादितिः ॥३॥
ममच्चन त्वे(१८,८)त्यादीनाम्त्वेषां यथान्त एव तु ।
वामदेव ऋषिर्विद्यादृचाप्येव विशेषतः ॥४॥
त्रसदस्युः पौरुकुत्स्य ऋषिः सूक्ते मम द्विता(४२) ।
क उ श्रव(ख)(४३)दिति त्वस्य तथा तस्योत्तरस्य च ।
पुरुमीळ्होऽजमीळ्हश्च(ग) सौहोत्रौ तादृषौ स्मृतौ ॥५॥

इति चतुर्थं मण्डलम् ।

---

(क) गोतमो वामदेवोऽथेति ज० ।
(ख) मोक्षमूलरसम्पादित ऋग्वेदे क ऊं श्रवदिति पाठोऽस्ति ।
(ग) पुरुमीळ्होऽजमीळ्हेति ज० ।

## अथ पञ्चमं मण्डलम् ।

अबोध्यग्निरुपक्रम्य पञ्चमं मण्डलं प्रति ।
पुत्राद्यैः सह भौमोऽत्रिर्मुनिरित्यवगम्यताम् ॥ १ ॥
अत्र तत्क्रमोचा ये ज्ञेयास्तविस्तृता इति ।
अबोध्यग्नि(१)रिति तस्मिन्नृषी बुधगविष्ठिरौ ॥ २ ॥
कुमार(२)मिति चैतस्मिन् कुमारो वा वृशोऽथवा ।
वृशो जार(क) इति ज्ञेय उभौ वाच समुच्चितौ ॥ ३ ॥
कमेत(१,२)मिति चैतस्यां तथा विज्योतिषे(२,८)त्यृचि ।
वृश एव ऋषिर्विद्यात्र विकल्पसमुच्चयौ ॥ ४ ॥
त्वमग्न(१) इति सूक्तेषु चतुष्केषु वसुश्रुतः ।
सखायः सं व(७) इत्यस्मिन्निषस्तस्योत्तरेऽपि च ॥ ५ ॥
त्वामग्न(९) इति चैतस्मिन् गयस्तस्योत्तरेऽपि च ।
जनस्य गोपा(११) सूक्तेषु चतुष्केषु सुतम्भरः ॥ ६ ॥
प्र वेधस(१५) इति तस्मिन् धरुणोऽङ्गिरसः सुतः ।
बृहद्वय(१६) इति तस्मिन् पुरु(ख)स्तस्योत्तरेऽपि च ॥ ७ ॥
प्रातरग्नि(१८)रिति तस्मिन्मृक्तवाहा द्वितो मुनिः ।
अभ्यवस्था(१९)यमग्ने (२०)च सूक्तयोरेतयोर्मुनिः ॥ ८ ॥

(क) जान इति सर्वानुक्रमण्या दृश्यते ।

(ख) पूरुरिति सर्वानुक्रमण्यामुपलभ्यते ।

वव्रिर्नाम मुनिः पूर्वे प्रयस्वन्तस्तदुत्तरे ।
मनुष्वत्त्वे(११)ति सूक्तस्य समो नाम मुनिः स्मृतः ॥ ८ ॥
प्र विश्वसाम(१२)न्नित्यस्य विश्वसामेत्यृषिः स्मृतः ।
अग्ने सहन्त(१३)मित्यस्य द्युम्नोऽयं विश्वचर्षणिः ॥ १० ॥
अग्ने त्वं(१४) सूक्तमेकर्चां द्वैपदा विद्यते क्रमात् ।
विप्रबन्धुः श्रुतबन्धुः सुबन्धुर्बन्धुरित्यमी ॥ ११ ॥
गौपायना इमे ज्ञेया आवा गौपायना[क] इति ।
ऋषिरच्छा व(१५) [ख]इत्यस्मिन्नुत्तरे च वसूयवः ॥ १२ ॥
अनस्वन्ते(१०)ति सूक्तस्य चिरप्यपुरुकुत्सजौ ।
त्र्यरुणत्रसदस्यू द्वावश्वमेधश्च भारतः ॥ १३ ॥
अश्वानां निरूपणामेषां पूर्व्वासामितरौ सह ।
अथवा भौम एवात्रिस्त्वृषिरत्र न प्रश्यते[ग] ॥ १४ ॥
दानक्रियायमेकस्य दाव्रनदाव्रता यतः[घ] ।
समिद्धो अग्नि(१८)रित्यस्मिन् विश्ववाराचिगोत्रजा ॥ १५ ॥
घर्य्यमे(१९)त्यस्य सूक्तस्य गौरिवीतिः स शक्तिजः ।
कस्य वीरः क(२०) इत्यस्य बभ्रुर्नाम ऋषिः स्मृतः ॥ १६ ॥
इन्द्रो रथाय(२१)सूक्तेऽस्मिन्नवस्यु[ङ]र्नाम संस्मृतः ।

---

(क) गौपायना इति सर्वानुक्रमणी ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे, अच्छ व इति पाठोऽस्ति ।

(ग) प्रश्यते इति घ० च० ।

(घ) दानक्रियेयमेकस्य दाव्रतादाव्रता यत इति पाठः सम्भवितुमर्हति ।

(ङ) नावस्युरिति सर्वानुक्रमणी ।

# अथ तृतीयं मण्डलम्।



द्वितीय(क)श्च तृतीय(ख)श्च विश्वामित्रस्य जागते।
नवमं(ग) बार्हतं सूक्तं त्रिष्टुबस्योत्तमा(घ)न्निचृत् ॥१॥
औष्णिहे(ङ) द्वे च गायत्रे(च) बार्हतादुत्तराणि तु।
षोडशे षड्ऋचे सूक्ते(छ) प्रगाथा बार्हता दृचाः ॥२॥
तुभ्यं स्तोका(ज)घृतवन्तः(झ) समर्चन्तु चयोदशम्(ञ)।
ये वृक्णासः(ट) पुरीष्यासः(ठ) उच्छ्रयस्वे(ड)त्यनुष्टुभः ॥३॥
त्रिष्टुबेव विराड्रूपा तुभ्यं स्तोतृ(ढ)गच या।
सतोबृहत्यौ तत्र द्वे औजिष्ठन्ते(ण) दश त्रिपः(त) ॥४॥
अतोऽन्यत्त्रैष्टुभं सर्वमानिर्मथित(थ) इत्यतः।
अनुष्टुभादिगायत्रं(द) वैराजं चोत्तरे(ध) ततः ॥५॥
उत्तर(न) जागतं तस्य त्रिष्टुभस्तिस्र उत्तमाः(प)।
गायत्रे उत्तरे सूक्ते(फ) तयोः षड्ऋच उत्तरे ॥६॥

---

(क) सू० २। (ख) सू० ३। (ग) सू० ६। (घ) सू० ६, ऋ० ६। (ङ) सू० १०। (च) सू० ११, १२। (छ) सू० १६। (ज) सू० २१, ऋ० १। (झ) सू० २१, ऋ० २। (ञ) सू० १३। (ट) सू० ८, ऋ० ७। (ठ) सू० २२, ऋ० ४। (ड) सू० ८, ऋ० ३। (ढ) सू० २१, ऋ० ४। (ण) सू० २१, ऋ० ५। (त) सू० २३, ऋ० ३। (थ) सू० २३। (द) सू० २४। (ध) सू० २५। (न) सू० २६। (प) सू० २६, ऋ० ७, ८, ६। (फ) सू० २७, २८।

अनुष्टुभस्तु विंशी च द्वाविंशी द्वादशी(क) च या ॥१३॥
अष्टादशी(ख) त्वृहत्यस्य जगत्येव तु षोड़शी(ग)।
इमं मह उपक्रम्य त्रैष्टुभान्युत्तराणि षट्(घ) ॥१४॥
तेषां षष्ठे चतस्रस्तु मैत्रे गायत्र्य उत्तमाः(ङ)।
जागत(च)त्रैष्टुभे(छ) सूक्ते सप्तर्चे द्वे उपोत्तमे।
गायत्रमुत्तमं(ज) तस्य त्रिष्टुभस्तिस्र(झ) आदितः ॥१५॥

इति तृतीयं मण्डलम्।

---

(क) सू॰ ५३, ऋ॰ १२, २०, २२। (ख) सू॰ ५३, ऋ॰ १८। (ग) सू॰ ५३, ऋ॰ १६। (घ) सू॰ ५४, ५५, ५६, ५७, ५८, ५९। (ङ) सू॰ ५९, ऋ॰ ६, ७, ८, ९। (च) सू॰ ६०। (छ) सू॰ ६१। (ज) सू॰ ६२। (झ) सू॰ ६२, ऋ॰ १, २, ३।

# अथ चतुर्थं मण्डलम् ।

प्रथमा(क) चेष्टुभेष्वष्टिर्वामदेवस्य षट्पदा ।
द्वितीया(ख) त्रिजगत्यस्य तृतीया(ग)स्यां निचृद्धृतिः ॥१॥
सप्तमस्य तु सूक्तस्य प्रथमा(घ) जगतीनिचृत् ।
अनुष्टुभः पराः पञ्च प्राक्(ङ) सप्तस्य यदि(च)त्यतः ॥२॥
गायत्रे दशमे सूक्ते भुरिजः पदपङ्क्तय.(छ) ।
उष्णिहो वा विराजस्ता.(ज) पञ्चम्या(झ)सामनुष्टुपा ॥३॥
च इमे च महापूर्वा पदपङ्क्तिर्निगद्यते ।
अग्निर्होते(ञ)ति गायत्रं नवमं चाष्टमं(ट) च यत् ॥४॥
अयं यज्ञ(ठ)मश्च श्वेतं(ड) प्राक्व्याँवस्य ते उभे ।
गायत्राणि तु वै चौणि(ढ) न किरिन्द्रेति तच तु ॥५॥
वामं वामन्ते(ण) क इम(त)मेतद्दे(थ)दित्यनुष्टुभः ।
चतुर्थस्यानुवाकस्य जागतं सूक्तमुत्तमम्(द) ॥६॥

---

(क) सू॰ १, ऋ॰ १। (ख) सू॰ १, ऋ॰ २। (ग) सू॰ १, ऋ॰ ३। (घ) सू॰ ७, ऋ॰ १। (ङ) सू॰ ७, ऋ॰ २, ३, ४, ५, ६। (च) सू॰ ७, ऋ॰ ७। (छ) सू॰ १०, ऋ॰ १, २, ३। (ज) सू॰ १० ऋ॰ ४, ६, ७, ८। (झ) सू॰ १०, ऋ॰ ५। (ञ) सू॰ १५। (ट) सू॰ ८, ९। (ठ) सू॰ १०, ऋ॰ १४। (ड) सू॰ २७, ऋ॰ ५। (ढ) सू॰ ३०, ३१, ३२। (ण) सू॰ ३०, ऋ॰ २४। (त) सू॰ २४, ऋ॰ १०। (थ) सू॰ ३० ऋ॰ ८। (द) सू॰ ४५।

चतुर्थस्योत्तमा[क]मेकामृचमुद्धृत्य चोभयोः।
प्रथमा[ख] मृचमुद्धृत्य अष्टमस्यापि जागतम् ॥७॥
अनुष्टुप्सप्तमस्यान्त्या[ग] चतस्रोऽन्त्या[घ]श्च पञ्चमे।
पञ्चमस्यानुवाकस्य मध्ये गायत्रयोर्द्वयोः[ङ] ॥८॥
द्वितीयश्च[च] तृतीयश्च[छ] सूक्ते आनुष्टुभे उभे।
गायत्रं सप्तमं[ज] सूक्तं जागते नवमाष्टमे[झ] ॥९॥
नवमस्य तु ये ते त्रिरित्यन्त्या[ञ] मृचं विना।
जगत्येवोत्तमस्यान्त्या[ट]दशमी[ठ] पञ्चमस्य तु ॥१०॥
एकादशस्य गायत्रस्तृचोऽन्त्यो[ड]दशमस्य च।
द्वादशे तु द्वितीया च तृतीया चोत्तमा[ढ] च या।
आनुष्टुभे त्रिष्टुभस्ताः पुरउष्णिक् च पञ्चमी[ण] ॥११॥

इति चतुर्थं मण्डलम्।

---

(क) सू० ३६, ऋ० ९ ; सू० ४५, ऋ० ७। (ख) सू० ४०, ऋ० १। (ग) सू० ३९, ऋ० ६। (घ) सू० ३७, ऋ० ५, ६, ७, ८। (ङ) सू० ४६, ४९। (च) सू० ४७। (छ) सू० ४८। (ज) सू० ५२। (झ) सू० ५३, ५४। (ञ) सू० ५४, ऋ० ६। (ट) सू० ५८, ऋ० ११। (ठ) सू० ५०, ऋ० १०। (ड) सू० ५५, ऋ० ८, ९, १० ; सू० ५६, ऋ० ५, ६, ७। (ढ) सू० ५७, ऋ० २, ३, ८। (ण) सू० ५७, ऋ० ५।

## अथ पञ्चमं मण्डलम् ।

आनुष्टुभानां सूक्तानां पङ्क्तिरन्त्या[क]चिमण्डले ।
उरोष्ट[ख] इन्द्र[ग]कुत्सो[घ]ऽच्छ[ङ]वल्गित्या द्ये[च]यद्द्य[छ] च ॥१॥
विदा[ज]आचिकिताने[झ]ति सूक्तान्येतान्यपास्य तु ।
अत्रीणां पञ्चमं[ञ] सूक्तं गायत्रं पाङ्क्तमुत्तरं[ट] ॥२॥
आनुष्टुभं सप्तम[ठ]न्तु जागतं सूक्तमष्टमं[ड] ।
नवमं दशम[ढ]न्त्वेषां सूक्ते आनुष्टुभे तयोः ॥३॥
पूर्वस्य पञ्चमी[ण]पङ्क्तिश्चतुर्थी[त] चरमस्य च ।
अतोऽन्यत्त्रैष्टुभं सर्वमामवेधम[थ]इत्यतः ॥४॥
उद्धृत्योपोत्तमे सूक्ते गायत्रेऽर्चन्त इत्युभे[द] ।
मकरोच चतुर्विंशीं जनस्ये[ध]ति च जागतं ॥५॥
अष्टौ पराणि सूक्तानि[न] ज्ञेयान्यानुष्टुभान्यतः ।
चतुर्थ्यन्त्या[प]विराड्रूपा आद्ये[फ]गायत्र्यौ त्विह ॥६॥

---

(क) सू॰ ७, १६, १७, १८, २०, २१, २२, २३, ३६ । (ख) सू॰ २८ । (ग) सू॰ ३१ । (घ) सू॰ ७४ । (ङ) सू॰ २५ । (च) सू॰ ६७, ८४ । (छ) सू॰ ७३ । (ज) सू॰ ४५ । (झ) सू॰ ६६ । (ञ) सू॰ ५ । (ट) सू॰ ६ । (ठ) सू॰ ७ । (ड) सू॰ ८ । (ढ) सू॰ ९, १० । (ण) सू॰ ९, ऋ॰ ५ । (त) सू॰ १०, ऋ॰ ४ । (थ) सू॰ १५ । (द) सू॰ १३, १४ । (ध) सू॰ ११ । (न) सू॰ १६, १७, १८, १९, २०, २१, २२, २३ । (प) सू॰ १९, ऋ॰ ५ । (फ) सू॰ १९, ऋ॰ १, २ ।

द्विपदा(क)नुष्टुभे(ख) च द्वे गायत्रं तत उत्तरं(ग) ।
त्रैष्टुभा(घ)नुष्टुभौ(ङ)सूक्ते परे पूर्वापरौ तृचौ ॥७॥
अनुष्टुब्(च)द्वे च गायत्र्यौ(छ) उत्तरस्योत्तरस्तृचः ।
त्रिष्टुबेका(ज)जगत्येका(झ)त्रिष्टुबेका(ञ)दितस्तृचः॥८॥
त्रैष्टुभान्येव(ट) पञ्चोर्ध्वं परन्त्वष्टसु आगतं(ठ) ।
एतत्तु त्रिष्टुबन्त(ड)ञ्च यस्त(ढ)श्चानुष्टुभं परं ॥९॥
स आगमत्त्रैष्टुभे द्वे(ण) द्वे(त) एवानुष्टुभे ततः ।
स आगमदिति तस्य तृतीया(थ) जगती स्मृता ॥१०॥
उत्तराणि तु सूक्तानि(द) चत्वारि त्रैष्टुभान्यतः ।
तेषामेकातिजगती द्वितीयस्यास्ति षोडशी(ध) ॥११॥
प्रथमस्य नवर्चस्य प्रथमा(न)स्तिस्र उष्णिहः ।
अभि न इन्द्रे(प)तिचित्रु(फ)प्रैष स्तोमो(ब)वृहद्वयः(भ) ॥१२॥
एता एतेषु प्रकर्ष्या यं वै(म)यत्ते(य)त्यनुष्टुभे ।

---

(क) सू० २४। (ख) सू० २५। (ग) सू० २६। (घ) सू० २७, ऋ० १, २, ३। (ङ) सू० २७ ऋ० ४, ५, ६। (च) सू० २८, ऋ० ४। (छ) सू० २८, ऋ० ५, ६। (ज) सू० २८, ऋ० १। (झ) सू० २८, ऋ० २। (ञ) सू० २८, ऋ० ३। (ट) सू० २९, ३०, ३१, ३२, ३३। (ठ) सू० ३४। (ड) सू० ३४, ऋ० ९। (ढ) सू० ३५। (ण) सू० ३६, ३७। (त) सू० ३८, ३९। (थ) सू० ३९, ऋ० ३। (द) सू० ४०, ४१, ४२, ४३। (ध) सू० ४१, ऋ० १६। (न) सू० ४०, ऋ० १, २, ३। (प) सू० ४१, ऋ० १९। (फ) सू० ४१, ऋ० १७। (ब) सू० ४२, ऋ० १६। (भ) सू० ४३, ऋ० १५। (म) सू० ४०, ऋ० ९। (य) सू०४०, ऋ० ५।

# अथ षष्ठं मण्डलम् ।



चैष्टुभेष्वष्टमं सूक्तं भरद्वाजस्य जागतम् ।
अद्येभिस्तवे[क]त्येतास्त्वभुद्धृत्य तूत्तमाम् ॥१॥
सप्तमं[ख] द्विजगत्यन्तं त्वं शतानीति प्रकरौ[ग] ।
चतुर्दशं द्वितीयस्य सूक्ते आनुष्टुभे उभे ॥२॥
अच्छानो[घ]ऽभिप्रयांसी[ङ]ति प्रकर्याविव ते उभे ।
जगत्यौ[च]प्रकरौ निचृज्जगत्या[छ]वतिप्रकरौ[ज] ॥३॥
एतौ पञ्चदशस्य द्वौ आगतस्यादितस्तृचः ।
अनुष्टुप्सप्तदश्य[झ]स्य बृहत्यष्टादशी[ञ]निचृत् ॥४॥
षट्चत्वारिंश[ट]श्च त्रिष्टुप् गायत्रे सति षोडशे ।
सप्तविंशत्युत्तमे च द्वे तिस्र एता अनुष्टुभः[ठ] ॥५॥
प्रगाथा वर्धमाना[ड]स्य षष्ठी चापि प्रतीयताम् ।
एका सप्तदशस्यान्त्या[ढ] द्विपदा दशमस्य[ण] च ॥६॥

---

(क) सू० ८, ऋ० ७। (ख) सू० ७, ऋ० ६, ७। (ग) सू० २, ऋ० ११। (घ) सू० १४, ऋ० ६। (ङ) सू० १५, ऋ० १५। (च) सू० १५, ऋ० १, २। (छ) सू० १५, ऋ० ३। (ज) सू० १५, ऋ० ६। (झ) सू० १५, ऋ० १७। (ञ) सू० १५, ऋ० १८। (ट) सू० १६, ऋ० ४६। (ठ) सू० १६, ऋ० २७, ४७, ४८। (ड) सू० १६, ऋ० १, ६। (ढ) सू० १७, ऋ० १५। (ण) सू० १०, ऋ० ७।

धौर्न सूक्तं गता या तृचिपिप्रो[क]रिति सा विराट्।
आ गाव इति सूक्तस्य द्वितीयाप्रभृतिस्तृचः ॥७॥
जागत[ख]स्त्रैष्टुभस्यास्य तथैवानुष्टुबुत्तमा[ग]।
आनुष्टुभ[घ] इहस्त्यन्त[ङ] मत्यमा इति सूक्तः ॥८॥
षष्ठौ[च]द्विपदं परं यत्तु तस्यादौ षडनुष्टुभः[छ]।
विराज[ज] स्तूत्तरास्तिस्रस्तासां मध्येव वा विराट्[झ] ॥९॥
आनयदिति तस्मिन् गायत्रेऽनुष्टुबुत्तमा[ञ]।
पुरुतम[ट]मिति लेपा तथैवातिनिष्टमता ॥१०॥
तामिद्विसूक्ते प्रागाये प्रगाथा बार्हता[ठ]स्तृचाः।
स्वादुष्किलेति सूक्तस्य जगती सप्तविंश[ड]च ॥११॥
चतुर्विंशो[ढ] गायत्री चयोविंशो[ण]त्यनुष्टुक्।
जगविंशो[त] इहत्यस्य गायत्र्या द्विपदोत्तरा[थ] ॥१२॥
स्तुषे जनमिति तस्य शक्वर्येकोत्तमा[द] निचृत्।
आदितः इन्द्रिसूक्तस्य प्रगाथौ बार्हतौ[ध] तृचौ ॥१३॥

---

(क) सू० २०, ऋ० ७। (ख) सू० २८, ऋ० १, २, ३। (ग) सू० २८, ऋ० ८। (घ) सू० ४२, ऋ० १, २, ३। (ङ) सू० ४२, ऋ० ४। (च) सू० ४३। (छ) सू० ४४, ऋ० १, २, ३, ४, ५, ६। (ज) सू० ४४, ऋ० ७, ८, ९। (झ) सू० ४४ ऋ० ८। (ञ) सू० ४५, ऋ० ३३। (ट) सू० ४५, ऋ० ३९। (ठ) सू० ४६, ऋ० ६, ७। (ड) सू० ४७, ऋ० २७। (ढ) सू० ४७, ऋ० २४। (ण) सू० ४७, ऋ० २३। (त) सू० ४७, ऋ० १९। (थ) सू० ४७, ऋ० २५। (द) सू० ४८, ऋ० १५। (ध) सू० ४८, ऋ० १, २।

बृहती(क) जगती(ख) त्रिष्टु(ग)ब्जगती(घ) चोत्तरा ऋचः।
उत्तरौ च प्रगाथौ द्वौ तृचौ बार्हत(ङ)काकुभौ(च) ॥१४॥
अष्टादशीत्र्योदश्योरन्तरा(छ)पुरउष्णिहः।
बृहत्य(ज)तिजगत्यौ(झ) च प्रगाथश्चैव काकुभः(ञ) ॥१५॥
द्वे बृहत्यौ(ट) त्रिष्टुबे(ठ)कानुष्टुब(ड)श्चोत्तरा ऋचः।
महासतोबृहत्यौ(ढ) च महा च बृहतीदयम्(ण) ॥१६॥
जगती(त)त्रिष्टुबि(थ)त्याभ्यां सन्द्राभ्यामत्र दृश्यते।
पञ्चमस्यानुवाकस्य दशमस्तृच औष्णिहः(द) ॥१७॥
तृतीयस्य तु गायत्र्यो विश्वेदेवास ए(ध)ति षट्।
गायत्रं(न) पञ्च सूक्तानि चतुर्थप्रभृतीन्यथ ॥१८॥
विश्वेदेवासमसा(प)जाम्यो जगत्यावेव(फ) ते उभे।
आ ते स्वस्ति(ब)मपि पन्थां(भ) यां पूष(म)न्नित्यनुष्टुभः ॥१९॥

---

(क) सू० ४८, ऋ० १। (ख) सू० ४८, ऋ० ३। (ग) सू० ४८, ऋ० ५। (घ) सू० ४८, ऋ० ६। (ङ) सू० ४८, ऋ० १०। (च) सू० ४८, ऋ० ११। (छ) सू० ४८, ऋ० १३, १८। (ज) सू० ४८, ऋ० १४। (झ) सू० ४८, ऋ० १५। (ञ) सू० ४८, ऋ० १६। (ट) सू० ४८, ऋ० १९, २०। (ठ) सू० ४८, ऋ० २१। (ड) सू० ४८, ऋ० २२। (ढ) सू० ४८, ऋ० ६, ८। (ण) सू० ४८, ऋ० ७, २१। (त) सू० ४९, ऋ० १५। (थ) सू० ४९, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४। (द) सू० ५१, ऋ० १३, १४, १५। (ध) सू० ५२, ऋ० ७, ८, ९, १०, ११, १२,। (न) सू० ५३, ५४, ५५, ५६, ५७। (प) सू० ५२, ऋ० १४। (फ) सू० ५८, ऋ० २। (ब) सू० ५६, ऋ० ६। (भ) सू० ५१, ऋ० १६। (म) सू० ५३, ऋ० ८।

बार्हतं दशमं[क] तस्य षलस्योऽन्या अनुष्टुभः[ख]।
त्रिष्टु[ग]ब्बृहत्य[घ]नुष्टुप्[ङ] च परस्य तृच उत्तमः ॥२०॥
गायत्रस्य सतोऽन्यास्तु त्रिष्टुभस्तिस्र[च] आदितः।
गायत्रमुत्तमं[छ] सूक्तं त्रिष्टुभ[ज]स्योत्तमा निचृत् ॥२१॥
जगत्यः प्रथमास्तिस्र[झ]स्तथा चान्त्या त्रयोदशी[ञ]।
षष्ठस्य त्वनुवाकस्य पञ्च त्रिष्टुभ[1] उत्तमाः[ट] ॥२२॥
उद्धृत्याधिरिवे[ठ]त्येकादशौ च द्वे उपोत्तमे।
सप्तमस्य तु सूक्तस्य जगत्यौ द्वे उपोत्तमे[ड] ॥२३॥
नवमं[ढ] जागतं सूक्तं दशमे[ण]चादितस्तृचः।
उत्तमस्य जगत्यौ तु षष्ठी[त] च दशमी[थ] च या ॥२४॥
एका सप्तदशी[द] पङ्क्तिः संवाशते[ध]ति शक्वरी।

इति षष्ठं मण्डलम् ॥

---

(१) अनुष्टुभ इति भ-पुस्तके पठ्यते।

(क) सू० ५९। (ख) सू० ५९, ऋ० ७, ८, ९, १०। (ग) सू० ६०, ऋ० १२। (घ) सू० ६०, ऋ० १४। (ङ) सू० ६०, ऋ० १५। (च) सू० ६०, ऋ० १, २, ३। (छ) सू० ६१। (ज) सू० ६१, ऋ० १४। (झ) सू० ६२, ऋ० १, २, ३। (ञ) सू० ६२, ऋ० १३। (ट) सू० ६३, ६४, ६५, ६६, ६७। (ठ) सू० ७४, ऋ० १४, १५, १६। (ड) सू० ६८, ऋ० १०, ११। (ढ) सू० ७०। (ण) सू० ७१, ऋ० १, २, ३। (त) सू० ७५, ऋ० ६। (थ) सू० ७५, ऋ० १०। (द) सू० ७५, ऋ० १७। (ध) सू० ६३, ऋ० १०।

# अथ सप्तमं मण्डलम् ।



त्रैष्टुभे तु वसिष्ठस्य विराजोऽष्टादशा(क)दितः ।
प्रथमस्यानुवाकस्य द्वैपदं सूक्तमुत्तमम्(ख) ॥१॥
चतुर्दश त्वृचत्यादि(ग) तस्माद्गायत्रमुत्तरम्(घ) ।
प्रगाथं बार्हतं सूक्तं द्वादशर्चमुपोत्तमम्(ङ) ॥२॥
द्वितीयस्यानुवाकस्य तेषु तेषामुपोत्तमम्(च) ।
प्रगाथशेषामुद्धृत्य द्वितीया द्विपदान्त्यचम्(छ) ॥३॥
वैराजं पञ्चम(ज) सूक्तं त्रिष्टुबस्योत्तमा(झ) निवृत् ।
गायत्र(ञ) त्रिविराडन्तं(ट) द्वादशर्चं चतुर्दशम् ॥४॥
तृतीयस्यानुवाकस्य चतस्रोऽ(ठ)न्त्या अनुष्टुभः ।
उत्तमस्य तु सूक्तस्य गायत्री प्रथमा(ड) पुनः ॥५॥
उपरिष्टाद्बृहत्यस्तु तिस्रो(ढ)मध्यगता ऋचः ।
आदावाद्यस्य सूक्तस्य द्विपदा एकविंशतिः(ण) ॥६॥

---

(क) सू० १, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८। (ख) सू० १७। (ग) सू० १४, ऋ० १। (घ) सू० १५। (ङ) सू० १६। (च) सू० ३२। (छ) सू० ३२, ऋ० ३। (ज) सू० २२। (झ) सू० २२, ऋ० ९। (ञ) सू० ३१। (ट) सू० ३१, ऋ० १०, ११, १२। (ठ) सू० ५५, ऋ० ५, ६, ७, ८,। (ड) सू० ५५, ऋ० १। (ढ) सू० ५५, ऋ० २, ३, ४। (ण) सू० ३४, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६, १७, १८, १९, २०, २१।

अष्टमस्य जगत्याद्या(क) सूक्तस्यैकादशस्य(ख) च ।
त्रयोदशं जागतं तु सूक्तं सप्तदशं(ग) च यत् ॥७॥
तयोः पूर्वे(घ) त्रिष्टुबन्तं प्रकर्ष्यन्तमथोत्तरम्(ङ) ।
चतुर्थस्यानुवाकस्य प्रगाथा बार्हता(च)स्तृचाः ॥८॥
सूक्तस्यानुष्टुबन्तस्य(छ) चतुर्थस्यादितस्तु यः ।
मारुतस्तृच गायत्रस्तृचः सान्तपना(ज) इति ॥९॥
एकादशा(झ)द्यौ सूक्तस्य द्विपदाः प्रथमस्य तु ।
एकादशस्य तिस्रो(ञ)ऽन्या गायत्र्यो नव(ट)चादितः ॥१०॥
प्रगाथा बार्हताः शेषाः(ठ) पुरउष्णिक्तु षोडशी(ड) ।
त्रयोदशं(ढ) तु वैराजमृचावुद्धृत्य दूतमे(ण) ॥११॥
पञ्चमस्यानुवाकस्य गायत्रं सूक्तमुत्तमम्(त) ।
एकादशे(थ) चतुर्थे(द) च प्रगाथा बार्हतास्तृचाः ॥१२॥
ऐन्द्रावरुणे द्वे सूक्ते(ध) दशर्चे जागते उभे ।

---

(क) सू० ४१, ऋ० १। (ख) सू० ४४, ऋ० १। (ग) सू० ५०। (घ) सू० ४६। (ङ) सू० ५०, ऋ० ४। (च) सू० ५९, ऋ० ३, ५। (छ) सू०५९, ऋ० १२। (ज) सू० ५९, ऋ० ९, १०, ११। (झ) सू० ५९, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११। (ञ) सू० ६६, ऋ० १७, १८, १९। (ट) सू० ६६, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९। (ठ) सू० ६६, ऋ० १०, ११, १२, १३, १४, १५। (ड) सू० ६६, ऋ० १६। (ढ) सू० ६८, ऋ० १, २, ३, ४, ५, ६, ७। (ण) सू० ६८, ऋ० ८, ९। (त) सू० ८९। (थ) सू० ८१, ऋ० १, ३, ५। (द) सू० ७४, ऋ० १, ३, ५। (ध) सू० ८२, ८३।

उत्तमस्य तु सूक्तस्य दशमी निचृदुत्तमा[क] ॥१३॥
षष्ठस्य त्वनुवाकस्य प्रगाथो बार्हतो[ख]द्व्यृचः ।
एका[ग]प्रस्तारपङ्क्तिश्च सप्तमस्यादितस्तृचः ॥१४॥
गायत्र्य उत्तरास्तिस्रः[घ] पार्जन्यं च त्रयोदशम्[ङ] ।
पञ्चमं[च] चोत्तमामेका[छ]मुद्धृत्यर्चमनुष्टुभम् ॥१५॥
उत्तमस्योत्तमा[ज]नुष्टुब्जगत्यष्टादशी[झ]निचृत् ।
एकविंशीत्रयोविंशौ[ञ] तयोभे सप्त[ट]चादितः ॥१६॥
उपोत्तमा तु सूक्तस्य प्रथमेका[ठ]स्त्वनुष्टुबृक् ॥

इति सप्तमं मण्डलम् ॥

---

(क) सू० ८८, ऋ० ५। (ख) सू० ९६, ऋ० १, २। (ग) सू० ९६, ऋ० ३। (घ) सू० ९६, ऋ० ४, ५, ६। (ङ) सू० १०२। (च) सू० ९४। (छ) सू० ९७, ऋ० १२। (ज) सू० १०४, ऋ० २४। (झ) सू० १०४, ऋ० १८। (ञ) सू० १०४, ऋ० २१, २२। (ट) सू० १०४, ऋ० १, २, ३, ४, ५, ६, ७। (ठ) सू० १०३, ऋ० १।

# अथाष्टमं मण्डलम् ।

प्रथमस्यानुवाकस्य गायत्रे मण्डलेऽष्टमे ।
द्वित्रिष्टुबन्तं(क) प्रथमं द्विप्रगाथादि(ख) बार्हतम् ॥१॥
तृतीये(ग) च चतुर्थे(घ) च प्रगाथा बार्हता द्वृचाः ।
तृतीयस्य बृहत्यन्त्या(ङ) गायत्र्यौ द्वे उपोत्तमे(च) ॥२॥
पुरउष्णिक् चतुर्थस्य सूक्तस्यैकोत्तमा(छ)निचृत् ।
पञ्चमस्य तु सूक्तस्य बृहत्यौ द्वे उपोत्तमे(ज) ॥३॥
य मे दुः(झ)खादवः सोमा(ञ) माकिरेने(ट)त्यनुष्टुभः ।
तृतीयस्य(ठ) चतुर्थस्य(ड) सूक्ते चानुष्टुभे उभे ॥४॥
द्वितीयस्यानुवाकस्य तत्र काश्चिदृचोऽन्यथा ।
चतुर्थे सूक्ते प्रथमा(ढ) षष्ठी(ण) पञ्चदशी(त) च या ॥५॥
चतुर्दशी(थ) चतुर्थी(द) च बृहत्यः पञ्चमी(ध)ककुप् ।
त्रिष्टु(न)ब्विराड्(प) जगत्ये(फ)व दशमीप्रभृतिस्त्वृचः ॥६॥

---

(क) सू० १, ऋ० ३३, ३४ । (ख) सू० १, ऋ० १, २ । (ग) सू० १ ऋ० ३ । (घ) सू० १, ऋ० ४ । (ङ) सू० ३, ऋ० २४ । (च) सू० ३ ऋ० २२, २३ । (छ) सू० ४, ऋ० २१ । (ज) सू० ५, ऋ० ३७, ३८ । (झ) सू० ३, ऋ० २१ । (ञ) सू० २, ऋ० २८ । (ट) सू० ५, ऋ० ३९ । (ठ) सू० ८ । (ड) सू० ९, ऋ० १ । (ढ) सू० ९ । (ण) सू० ९, ऋ० ५ । (त) ९, ऋ० १५ । (थ) सू० ९, ऋ० १४ । (द) सू० ९, ४ । (ध) सू० ९, ऋ० ५ । (न) सू० ९, ऋ० १० । (प) सू० ९, ऋ० ११ ।(फ) सू० ९, ऋ० १२ ।

गायत्रौ परिशिष्टानां द्वितीयान्त्यौ[क] तृचावुभौ ।
पञ्चमस्य[ख] बृहत्याभ्यां मध्येज्योति[ग]रनुष्टुबृक्[घ] ॥७॥
आस्तारपङ्क्ति[ङ]र्बार्हतः[च] प्रगाथश्चैवमस्त्रिविधिः ।
षष्ठस्य तूत्तमा[छ] त्रिष्टुप्पूनिष्ठा प्रथमा[ज]निचृत् ॥८॥
द्वितीया[झ]वर्धमाना तु सूक्तमुत्तर[ञ]मौष्णिहम् ।
प्रथमस्य[ट] तृतीयस्य[ठ] षष्ठ[ड]स्यौष्णिहमेव हि ॥९॥
तृतीयस्यानुवाकस्य प्रगाथे काकुभे उभे ।
उत्तमोपोत्तमे[ढ] सूक्ते तत्र काश्चिदृचोऽन्यथा ॥१०॥
उपोत्तमे सप्तविंशी[ण] द्विपदैकोत्तमास्त्विमाः ।
उष्णि[त]क्सतोबृहत्यौ[थ] च ककु[द]प्पङ्क्ति[ध]श्च ता ऋचः ॥११॥
वास्तोष्पते ध्रुवे[न]त्येष प्रगाथो बार्हतो तृचः ।
चतुर्थस्यानुवाकस्य प्रगाथाः काकुभा नव[प] ॥१२॥
आद्ये सूक्ते द्वितीये तु वक्ष्यते विधिराश्विने ।
त्रयः[फ] प्रगाथा बार्हताः प्रगाथाः काकुभास्त्रयः[ब] ॥१३॥

---

(क) सू॰ ६, ऋ॰ २, २१ । (ख) सू॰ १०, ऋ॰ १, ५ । (ग) सू॰ १०, ऋ॰ २ । (घ) सू॰ १० ऋ॰ ३ । (ङ) सू॰ १० ऋ॰ ४ । (च) सू॰ १० ऋ॰ ६ । (छ) सू॰ ११, ऋ॰ १० । (ज) सू॰ ११, १ । (झ) सू॰ ११ ऋ॰ २ । (ञ) सू॰ १२ । (ट) सू॰ १३ । (ठ) सू॰ १५ । (ड) सू॰ १८ । (ढ) सू॰ १९, २० । (ण) सू॰ १९, ऋ॰ २७ । (त) सू॰ १९, ऋ॰ ३४ । (थ) सू॰ १९, ऋ॰ ३५ । (द) सू॰ १९, ३६ । (ध) सू॰ १९, ३७ । (न) सू॰ १७, ऋ॰ १४, १५ । (प) सू॰ २१, ऋ॰ १, २, ३, ४, ५, ६, ७, ८, ९ । (फ) सू॰ २२, ऋ॰ १, ३, ५ । (ब) सू॰ २२, ऋ॰ १३ १५, १६ ।

तेषां मध्ये बृहत्येका(क) त्वनुष्टुप्काकुभस्तृचः(ख) ।
ककुप्(ग)च मध्येज्योति(घ)स्तु षड्डिमा श्चौष्णिहान्यतः ॥१४॥
परं चत्वारि(ङ) सूक्तानि यानि विश्वमना जगौ ।
यत्वापृच्छाद्(च)युञ्चाहि त्व(छ)मुद्दृत्यैते अनुष्टुभौ ॥१५॥
उष्णिग्गर्भा च गायत्री सूक्ते तावास्तुपोत्तमा(ज) ।
युवोःसूक्ते चतस्र(झ)स्तु षोडश्याद्या ऋचस्तथा ॥१६॥
उत्तमा(ञ) चैकविंशी(ट) च मताः पञ्चाप्यन्यो मताः ।
अग्निरुक्थे तु सूक्तस्य प्रगाथा बार्हता द्वृचाः(ठ) ॥१७॥
ये त्रिंशतीति सूक्तेऽस्मिंश्चतुर्थी(ड) पुरउष्णिगृक् ।
उत्तमस्य द्वितीया(ढ) च तृतीया(ण) बृहती निचृत् ॥१८॥
अनुष्टुबुत्तमा(त) बभ्रु(थ)रेकस्तु द्वैपदं परम् ।
पञ्चमस्यानुवाकस्य सूक्तस्य प्रथमस्य [illegible] ॥१९॥
दृशन्येका(द) पादनिचृच्चतस्रो(ध)ऽन्यास्तु पङ्क्तयः ।
अग्निं वो(न)वीतिहोत्रे(प)त्यृचावेते अनुष्टुभौ ॥२०॥

---

(क) सू० २२, ऋ० १० । (ख) सू० २२, ऋ० ८, ९ । (ग) सू० २२, ऋ० ११ । (घ) सू० २२, ऋ० १२ । (ङ) सू० २३, २४, २५, २६ । (च) सू० २४, ऋ० ३० । (छ) सू० २६, ऋ० २० । (ज) सू० २५, ऋ० २३ । (झ) सू० २६, ऋ० १६, १७, १८, १९ । (ञ) सू० २६, ऋ० २५ । (ट) सू० २६, ऋ० २१ । (ठ) सू० २७, ऋ० १, ३, ५, ७, ९, ११, १३, १५, १७, १९, २१ । (ड) सू० २८, ऋ० [illegible] (ढ) सू० ३०, ऋ० २ । (ण) सू० ३०, ऋ० ३ । (त) सू० ३०, ऋ० ४ । (थ) सू० २९ । (द) सू० ३१, ऋ० १० । (ध) सू० ३१, ऋ० १५, १६, १७, १८ । (न) सू० ३१, ऋ० १४ । (प) सू० ३१, ऋ० ९ ।

तृतीयश्च(क) चतुर्थश्च(ख) वार्हतानुष्टुभे तयोः।
उभयोरेव गायत्रः षोडशी(ग)प्रभृतिष्वृचः ॥२१॥
अधः पञ्चस्य मे(घ)त्यैन्द्रावार्हतेऽनुष्टुवुत्तमा।
उपरिष्टाज्ज्योतिष(ङ)न्तु पङ्क्तिस्तृचस्य पञ्चमी ॥२२॥
द्वाविंशत्यन्त्या(च) च मध्येऽस्ति मह्वा च बृहती(छ) तयोः।
अविताशी(ज)ति प्रक्रयः पदमहापङ्क्तिरुत्तमा(झ) ॥२३॥
जागतं यन्महापाङ्क्तं प्रेदं(ञ) सूक्तमिति स्मृतम्।
तस्यैकातिजगत्याद्या(ट) महापाङ्क्तानि तान्य(ठ)पि ॥२४॥
अग्निमस्तोष्यु(ड)पक्रम्य त्रीणि सूक्तानि तत्र तु।
इन्द्राग्नी युव(ढ)मित्यस्य द्वितीया शक्करी निचृत् ॥२५॥
त्रिष्टुवस्योत्तमा(ण)चैका सूक्तमस्मादनुत्तरम्।
त्रैष्टुभा(त)नुष्टुभौ(थ) ज्ञेयौ तस्य पूर्वोत्तरौ तृचौ ॥२६॥
षष्ठस्य त्वनुवाकस्य महापाङ्क्तं वधात्परम्(द)।
स्वादो(ध)स्तु त्रैष्टुभं सूक्तं जगती तत्र पञ्चमी(न) ॥२७॥

---

(क) सू० ३३। (ख) सू० ३४। (ग) सू० ३३,३४, ऋ० १६, १७, १८। (घ) सू० ३३, ऋ० १६। (ङ) सू० ३५। (च) सू० ३५, ऋ० २२, २४। (छ) सू० ३५, ऋ० २३। (ज) सू० ३६, ऋ० १, २, ३, ४, ५, ६। (झ) सू० ३६, ऋ० ७। (ञ) सू० ३७। (ट) सू० ३७, ऋ० १। (ठ) सू० ३७, ऋ० २, ३, ४, ५, ६, ७। (ड) सू० ३९, ४०, ४१। (ढ) सू० ४०, ऋ० २। (ण) सू० ४०, ऋ० १२। (त) सू० ४२, ऋ० १, २, ३। (थ) सू० ४२, ऋ० ४, ५, ६। (द) सू० ४७। (ध) सू० ४८। (न) सू० ४८, ऋ० ५।

तेषां मध्ये बृहत्येका[क] त्वनुष्टुप्काकुभबृचः[ख] ।
ककुप्[ग]च मध्येज्योति[घ]स्य पङ्क्तिमा औष्णिहान्यतः ॥१
परं चत्वारि[ङ] सूक्तानि यानि विश्वमना जगौ ।
यत्वापृच्छाद्[च]युच्याहि स[छ]मुद्धृत्येते अनुष्टुभौ ॥१५॥
उष्णिग्गर्भा च गायत्री सूक्ते तावासुपोत्तमा[ज] ।
युवोःसूक्ते चतस्र[झ]स्य षोडश्याद्या ऋचस्तथा ॥१६॥
उत्तमा[ञ] चैकविंशी[ट] च मताः पञ्चायत्र्यो मताः ।
अग्निरुक्थे तु सूक्तस्य प्रगाथा बार्हता बृचाः[ठ] ॥१७॥
ये त्रिंशतीति सूक्तेऽस्मिंश्चतुर्थी[ड] पुरउष्णिगृक् ।
उत्तमस्य द्वितीया[ढ] च तृतीया[ण] बृहती निचृत् ॥१८
अनुष्टुबुत्तमा[त] बभ्रु[थ]रेकस्तु द्वैपदं परम् ।
पञ्चमस्यानुवाकस्य सूक्तस्य प्रथमस्य तु ॥१९॥
द्विपद्येका[द]पादनिचृच्चतस्रो[ध]ऽन्यास्तु पङ्क्तयः ।
अग्नि वो[न]वीति ... २०॥

---

(१) न्यङ्कुशिरा इति क-चिह्नितपुस्तके पठ्यते । लिपिकरप्रमादकृत ऽयं पाठः ।

---

(क) सू० ४६, ऋ० २९। (ख) सू० ४६, ऋ० २३। (ग) सू० ४ ऋ० १०। (घ) सू० ४६, ऋ० ३३। (ङ) सू० ४६, ऋ० ६। ( सू० ४६, ऋ० २, ३, ४, ५। (छ) सू० ४६, ऋ० १३, ३०। (ज) स ४६, ऋ० ८। (झ) सू० ४६, ऋ० ९, २६। (ञ) सू० ४६, ऋ० १ (ट) सू० ४६, ऋ० ३१। (ठ) सू० ४६, ऋ० ५। (ड) सू० ४६, १५। (ढ) सू० ४६, ऋ० २१, २२, २४। (ण) सू० ४६, ऋ० १, ११, १८, १९, २५, २७, २८, ३२। (त) सू० ४६, ऋ० २४ ४६, ऋ० १८। (द) सू० ४६, ऋ० २०।

तृतीयस्य[क] चतुर्थस्य[ख] बार्हतानुष्टुभे तयोः ।
उभयोरेव गायत्रः षोड़शी[ग]प्रभृतिस्तृचः ॥२१॥
अधः पश्यस्व मे[घ]त्यैन्द्राबार्हतेऽनुष्टुबुत्तमा ।
उपरिष्टाज्ज्योतिष[ङ]न्नु पङ्क्तिस्तृचस्य पञ्चमी ॥२२॥
द्वाविंशन्त्या[च] च मध्येऽस्ति मधा च बृहती[छ] तयोः ।
अविताशी[ज]ति शक्वर्यः षण्महापङ्क्तिरुत्तमा[झ] ॥२३॥
जागतं यन्महापाङ्क्तं प्रेदं[ञ] सूक्तमिति स्मृतम् ।
तस्यैकातिजगत्याद्या[ट] महापाङ्क्तानि तान्य[ठ]पि ॥२४॥
अग्निमस्तोष्यु[ड]पक्रम्य त्रीणि सूक्तानि तत्र तु ।
इन्द्राग्नी युव[ढ]मित्यस्य द्वितीया शक्वरी निचृत् ॥२५॥
त्रिष्टुबस्योत्तमा[ण]चैका सूक्तमस्माधदुत्तरम् ।
त्रैष्टुभा[त]नुष्टुभौ[थ] ज्ञेयौ तस्य पूर्वोत्तरौ तृचौ ॥२६॥
षष्ठस्य त्वनुवाकस्य महापाङ्क्तं तृचात्परम्[द] ।
स्वादो[१]र्गाथा बार्हता द्वितीयस्योत्तमो[ध] ॥२७॥

---

(१) मोषश्चीति छ-चिह्नितपुस्तके पठ्यते ।

---

(क) सू० ४९, ऋ० १, ३, ५, ७, ९ । (ख) सू० ४९, ऋ० २, ४, ६, ८, १० । (ग) सू० ५१, ऋ० ७, ८, ९ । (घ) सू० ५२, ऋ० १० । (ङ) सू० ६३, ऋ० १, ४, ५, ७ । (च) सू० ५५, ऋ० ५ । (छ) सू० ६८, ऋ० १, ४, ७, १० । (ज) सू० ६९, ऋ० ४, ५, ६ । (झ) सू० ६९, ऋ० २ । (ञ) सू० ६९, ऋ० ११, १६ । (ट) सू० ७० । (ठ) सू० ७०, ऋ० १३ । (ड) सू० ७०, ऋ० १५ । (ढ) सू० ७०, ऋ० १४ । (ण) सू० ७१, ऋ० १०, ११, १२, १३, १४, १५ ।

आनुष्टुभास्तु चत्वारः[क] प्रगाथा आदितस्तृचाः ॥४१॥
पञ्चमस्योत्तमायास्तु तिस्रो[ख]ऽनुष्टुभ ईरिताः।
विश्वेत्ता विष्णु[ग]रित्येष प्रगाथो बार्हतो तृचः ॥४२॥
नवमप्रभृतीनान्तु सूक्तानां पृथगुत्तमाः।
बृहत्य[घ]नुष्टु[ङ]ब्त्रिष्टुप्[च] च त्रयाणां कथिता ऋचः ॥४३॥
नवमस्यानुवाकस्य प्रगाथा बार्हता तृचाः।
ज्ञेयास्तुर्णां सूक्तानां षष्ठा[छ]द्वे जागतात्परम् ॥४४॥
आनुष्टुभो बृहत्यन्तस्तृचो यस्त्वा यथा[ज] इति।
आनुष्टुभं द्विपङ्क्त्यादि कन्या वाः[झ] सूक्तमुत्तरम् ॥४५॥
पान्त[ञ]मित्यस्य सूक्तस्य प्रथमैका त्वनुष्टुबृक्।
दशमस्यानुवाकस्य सप्तमे त्रैष्टुभे पुनः ॥४६॥
षष्ठ्ये[ट]का जगती तस्याः पर आनुष्टुभस्तृचः[ठ]।
आनुष्टुभा द्वितीया[ड] द्वे परे त्रैष्टुभबार्हते[ढ] ॥४७॥
अनयोस्त्रैष्टुभे सूक्ते या चतुर्थी विराड्[ण]सौ।
उभौ त्वतिजगत्यादौ[त] बार्हतस्योत्तमे तृचौ[थ] ॥४८॥

---

(क) सू॰ ७४, ऋ॰ १, ४, ७, १०। (ख) सू॰ ७४, ऋ॰ १३, १४, १५। (ग) सू॰ ७७, ऋ॰ १०, ११। (घ) सू॰ ७८, ऋ॰ १०। (ङ) सू॰ ७९, ऋ॰ ९। (च) सू॰ ८०, ऋ॰ ८। (छ) सू॰ ८६। (ज) सू॰ ८९, ऋ॰ ५, ६, ७। (झ) सू॰ ९१। (ञ) सू॰ ९२, ऋ॰ १। (ट) सू॰ १००, ऋ॰ ६। (ठ) सू॰ १००, ऋ॰ ७, ८, ९। (ड) सू॰ ९५। (ढ) सू॰ ९६, ९७। (ण) सू॰ ९६, ऋ॰ ४। (त) सू॰ ९७, ऋ॰ १०, १२। (थ) सू॰ ९७, ऋ॰ ९।

उपरिष्टाद्वार्हतयोस्तयोः पूर्वः(क) प्रतीयताम्।
उत्तरस्य तृचस्याद्या(ख) त्रिष्टुबन्त्या(ग) जगत्यपि ॥४९॥
प्रगाथं वार्हतं सूक्तं षष्ठं पञ्चममौष्णिहम्(घ)।
अन्त्यानवम्यौ(ङ) सूक्तेऽस्मिन् पञ्चमे पुरउष्णिहौ ॥५०॥
उपोत्तमे सप्तमे च चतस्रः(च) काकुभाः स्मृताः।
अष्टमे त्रित्रिष्टुबन्ते(छ) प्रगाथा वार्हता तृचाः(ज) ॥५१॥
गायत्री तु तृतीया(झ)च हहत्यन्या त्रयोदशी(ञ)।
एका सतोहहत्यस्य चतुर्थी(ट) सा प्रतीयताम् ॥५२॥
उत्तमस्योत्तमा(ठ)नुष्टुब्विराड्रूपा तु पञ्चमी(ड)।
सतोहहत्यस्तस्यैव सप्तम्याद्ययुजस्तृचः(ढ) ॥५३॥
ककुब्गायत्री च ककुबष्टम्यादौ युजस्तृचः(ण)।
अन्याः शिष्टा हहत्यस्तु विज्ञेयास्तत्र चादितः(त) ॥५४॥

इति अष्टमं मण्डलम्।

---

(क) सू० ८७, ऋ० ११। (ख) सू० ८७, ऋ० १४। (ग) सू० ८७,
ऋ० १५। (घ) सू० ८८, ८९। (ङ) सू० ८८, ऋ० ६, १२। (च) सू०
८८, ऋ० ७, ८, १०, ११। (छ) सू० १०१, ऋ० १४, १५, १६। (ज)
सू० १०१, ऋ० २, ४, ६, ८, १०, १२। (झ) सू० १०१, ऋ० ३। (ञ)
सू० १०१, ऋ० १३। (ट) सू० १०१, ऋ० ४। (ठ) सू० १०२, ऋ०
१४। (ड) सू० १०२, ऋ० ५। (ढ) सू० १०२, ऋ० ७, ९, ११।
(ण) सू० १०२, ऋ० ८, १०, १२। (त) सू० १०३, ऋ० १, २, ३, ४,
६, १३।

# अथ नवमं मण्डलम् ।

गायत्रं पावमानीनां षष्टि सूक्तानि सप्त च ।
पञ्चमस्याच सूक्तस्य चतस्रो(क)ऽन्त्या अनुष्टुभः ॥१॥
पवस्व सोममन्द्रय(ख)मित्येष द्वैपदस्तृचः ।
अतिवारान(ग)लाय्यस्य(घ) द्वे एते पुरउष्णिहौ ॥२॥
उपोत्तमस्य चानुष्टुप्सूक्तस्याष्टादशी(ङ) विराट् ।
सप्तविंशु(च)त्तमे च द्वे तिस्रोऽनुष्टुभ(छ) उत्तमे ॥२॥
अतः पराणि सूक्तानि(ज) जागताः(1) प्राक् सतुद्रवात् ।
एकां त्रिष्टुभमुद्धृत्य सप्तमस्याष्टमी(झ)मृचम् ॥४॥
चतुर्दशं(ञ) पञ्चदशं(ट) चत्वारि(ठ) च तथादितः(ड) ।
एतानि त्रिष्टुबन्तानि जागतेष्विति गम्यताम् ॥५॥
द्वित्रिष्टुबन्ते तत्रापि द्वितीयाष्टादशे(ढ) उभे ।
त्रैष्टुभानि पराणि(ण) प्रागभि नो वाजसातमात् ॥६॥

---

(१) जागतानीति भवितुमर्हति ।

---

(क) सू० ५, ऋ० ८, ६, १०, ११ । (ख) सूक्त, ०१६, '१७०६ । १८ । (ग) सू० ६०, ऋ० २ । (घ) सू० ६७, ऋ० ३० । (ङ) सू० ६६, ऋ० १८ । (च) सू० ६७, ऋ० २० । (छ) सू० ६७, ऋ० ३१, ३२ । (ज) सू० ६८, ६६, ७०, ७१, ७२, ७३, ७४, ७५, ७६ ७७, ७८, ७६, ८०, ८१, ८२, ८३, ८४, ८५, ८६ । (झ) सू० ७४, ऋ० ८ । (ञ) सू० ६८, ऋ० १० । (ट) सू० ६६, ऋ० १० । (ठ) सू० ७०, ऋ० १० । (ड) सू० ७१, ऋ० ६ । (ढ) सू० ८५, ऋ० ११, १२ । (ण) सू० ८७, ८८, ८६, ६०, ६१, ६२, ६३, ६४, ६५, ६६, ६७ ।

चत्वार्यानुष्टुभान्यू(क)र्ध्वं तेभ्यः पञ्चौष्णिहानि(ख) च।
मे + + + + + + ॥७॥
+ + + + स्य बृहत्योर्द्वादशौ(ग) तयोः।
षोडशर्चस्य गायत्री(घ) द्वितीयोत्तरया सह ॥८॥
परीतो ऽपिष्ठुते(ङ)त्यस्मिन् प्रगाथा बार्हता द्वृचाः।
षोडशी च तृतीया च द्वे अस्य द्विपदे(च)उभे ॥९॥
अष्टमी च बृहत्य(छ)स्य नवमी च निचृत्पदा(ज)।
प्रगाथं काकुभं(झ) सूक्तं सतोबृहती यस्य न.(ञ) ॥१०॥
यवमध्या तु गायत्री स सुन्व(ट) इति काकुभे।
त्रैष्टुभं त्रिविराड्(ठ)न्तमूर्ध्वं बार्हतः(ड) परम् ॥११॥
तस्मिन् पिपीलिकामध्या(ढ)स्तिस्रोऽनुष्टुभ आदितः।
अया रुचे(ण)त्यथात्यष्टं पाङ्क्तानि(त) चौष्णतः परम् ॥१२॥

इति नवमं मण्डलम्।

---

(क) सू० ९८, ९९, १००, १०१। (ख) सू० १०२, १०३, १०४, १०५, १०६। (ग) सू० ९६, ऋ० १२। (घ) सू० १०१, ऋ० २, ३। (ङ) सू० १००। (च) सू० १०७, ऋ० ३, १६। (छ) सू० १०७, ऋ० ८। (ज) सू० १०७, ऋ० ९। (झ) सू० १०८। (ञ) सू० १०८, ऋ० १४,। (ट) सू० १०८, ऋ० १३। (ठ) सू० ११०, ऋ० १०, ११, १२। (ड) सू० ११०, ऋ० ४, ५, ६, ७, ८, ९। (ढ) सू० ११०, ऋ० १, २, ३। (ण) सू० १११। (त) सू० ११२, ११३, ११४।

उपान्त्या तु द्वितीयस्य षष्ठी या सप्तमस्य च ।
हरी न्वस्येति तिस्रश्च जगत्यः(क) पञ्च ता इमाः ॥७॥
पञ्चमी लस्य सूक्तस्य त्रिष्टुबे(ख)वाभिसारिणी ।
ऊर्ध्वमानुष्टुभादाद्या विमदस्य दशाचरा(ग) ॥८॥
अनुष्टुप्(घ) च तृचौ च द्वौ गायत्रौ(ङ) नवमी विराट्(च) ।
विमदस्य सहोदर्काः सर्वा आस्तारपङ्क्तयः(छ) ॥९॥
षष्ठे पुरस्ताद्बार्हते(ज) त्रिष्टुब(झ)न्ते कुह स्तुते ।
त्वन्त्या चिदानस्त्वं नस्तु तिस्र एता अनुष्टुभः(ञ) ॥१०॥
आनुष्टुभं(ट) तु दशमं तत्र प्रथमया सह ।
वर्षिमसौ महीत्युष्णिगा(ठ)नुष्टुभ्ये(ड)व पादतः ॥११॥
अन्त्य एवानुष्टुभ् सोऽपि युवं मक्षे(ढ)ति यस्तृचः ।
तृतीयस्यानुवाकस्य प्र सु ग्मन्तेति पञ्च च ॥१२॥
सप्तमी चाद्यसूक्तस्य जगत्यः(ण) पङ्क्तिमा ऋचः ।
चतुर्थस्य तु सूक्तस्य द्वितीयप्रभृतिर्हृचः ॥१३॥

---

(क) सू० १८, ऋ० १३, । सू० २३, ऋ० २, ३, ४, ६। (ख) सू० २६, ऋ० ५। (ग) सू० २०, ऋ० १। (घ) सू० २०, ऋ० २। (ङ) सू० २०, ऋ० ३, ४, ५, ६, ७, ८। (च) सू० २०, ऋ० ९। (छ) सू० २१, २२, २३, २४, २५, २६। (ज) सू० २२, ऋ० १०, ११, १२, १३, १४। (झ) सू० २२, ऋ० १५। (ञ) सू० २२, ऋ० ५, ७, ९। (ट) सू० २६। (ठ) सू० २६, ऋ० १, ४। (ड) सू० २६, ऋ० ३, ५, ९। (ढ) सू० २७, ऋ० ४, ५, ६। (ण) सू० ३२, ऋ० १, २, ३, ४, ५। सू० ३४, ऋ० ७।

प्रगाथो बार्हत[क]स्तस्मात्परा गायत्र्य[ख]स्तु षट्।
जागतान्य[ग]स्य सूक्तानि पञ्चमादधि सप्त तु ॥१४॥
एकां त्रिष्टुभ[घ]मुद्धृत्य सौर्यस्य दशमीमृचम्।
षष्ठसप्तमयोश्चान्ते[ङ] दशमस्य च तूत्तमाम्[च] ॥१५॥
चतुर्थस्यानुवाकस्य जागते[छ] प्रथमे उभे।
उद्धृत्यान्ये तयोः पूर्वा तिस्रस्त्वादित उत्तरान् ॥१६॥
षष्ठश्च सप्तमश्चैते जागते[ज] तत्र षष्ठतः।
उद्धृत्यान्ये सप्तमीश्च द्वितीयान्ये च सप्तमात् ॥१७॥
अष्टमस्य च सूक्तस्य जागत[झ]स्तूत्तमो तृचः।
एते लक्षाभिचारिण्यौ[ञ] के ते नर इति त्वृचौ ॥१८॥
पञ्च चैकादशिन्यान्त्या जगत्य[ट]स्त्वष्टमीं विना।
चतुर्दशस्य जागत[ठ]श्चतुर्थीप्रभृतिस्तृचः ॥१९॥
गायत्रानुष्टुभे[ड] सूक्ते मा प्रयत्त इति त्वुभे।
भाजनं तस्य पश्चादौ गायत्र्यो[ढ]ऽनुष्टुभः[ण] पराः ॥२०॥

---

(क) सू० ३३, ऋ० २, ३। (ख) सू० ३३, ऋ० ४, ५, ६, ७, ८, ९। (ग) सू० ३५, ३६, ३७, ३८, ३९, ४०, ४१। (घ) सू० ३७, ऋ० १०। (ङ) सू० ३५, ऋ० १३, १४। सू० ३६, ऋ० १३, १४। (च) सू० ३९, ऋ० १४। (छ) सू० ४३, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९। सू० ४४, ऋ० ४, ५, ६, ७, ८, ९। (ज) सू० ४८, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९। सू० ४९, ऋ० १, ३, ४, ५, ६, ७, ८, ९, १०। (झ) सू० ५०, ऋ० ६, ७। (ञ) सू० ५०, ऋ० ३, ४। (ट) सू० ५३, ऋ० ६, ७, ९, १०, ११। (ठ) सू० ५६, ऋ० ४, ५, ६। (ड) सू० ५७, ५८। (ढ) सू० ६०, ऋ० १, २, ३, ४, ५। (ण) सू० ६०, ऋ० ६, ७, १०, ११, १२।

यं रोदसी यया युगं ययेयमिति पङ्क्तयः(क)।
अव द्रके इति श्लोका महापङ्क्ति(ख)र्हि षट्पदा ॥२१॥
विराट्पूर्वा(ग) समिन्द्रेति त्रिष्टुब्बन्त्युत्तरैव वा।
पञ्चमस्यानुवाकस्य चत्वारि प्रागुपोत्तमा ॥२२॥
जागतान्यृ(घ)चमुद्धृत्य यां मे धिय(ङ)मिति त्विमाम्।
पूर्वयोरुत्तमे(च) चर्चौ परयोश्चोत्तमा(छ)मृचम् ॥२३॥
द्वितीयेऽनुष्टुब(ज)ष्टम्या नवम्या सह पञ्चमी।
तृचोऽस्य षष्ठीप्रभृतिः प्रगाथो बार्हतो(झ)मतः ॥२४॥
दशमी त्वस्य गायत्री(ञ) जगत्यो(ट)ऽन्या विनोत्तमाम्।
षष्ठस्य त्वनुवाकस्य जागते(ठ) सप्तमाष्टमे ॥२५॥
नवमी च तृतीयस्य प्रथमे चादितो तृचः।
नवमस्य पञ्चमी च दशमस्य च जागतः(ड) ॥२६॥
श्रेयो द्वितीयया साकं पञ्चमीप्रभृतिस्तृचः।
उपोत्तमस्य सूक्तस्य तथा प्रथमया सह ॥२७॥

---

(क) सू० ५६, ऋ० ८। सू० ६०, ऋ० ८, ९। (ख) सू० ५९, ऋ० ९।
(ग) सू० ५९, ऋ० १०। (घ) सू० ६२, ६४, ६५, ६६। (ङ) सू० ६४,
ऋ० १२। (च) सू० ६२, ऋ० १०, ११। सू० ६३, ऋ० १६, १७।
(छ) सू० ६५, ऋ० १५। सू० ६६, ऋ० १५। (ज) सू० ६२, ऋ० ५, ८,
९। (झ) सू० ६२, ऋ० ६, ७। (ञ) सू० ६२, ऋ० १०। (ट) सू०
६२, ऋ० १, २, ३, ४। (ठ) सू० ७५, ७६। (ड) सू० ७१, ऋ० ९।
सू० ६९, ऋ० १, २। सू० ७७ ऋ० ५। सू० ७८, ऋ० २, ५, ६, ७।
सू० ८३, ऋ० १।

उत्तमस्य चतस्रोऽन्त्या जगत्य[क] इति गम्यताम्।
सप्तमस्यानुवाकस्य आद्यमानुष्टुभं[ख] स्मृतम् ॥२८॥
अस्मिन् नवो नवस्तिस्रो द्वे द्वे ऋग्भ्याम्यनूचराः।
यदश्विनाघोरचक्षुः पूषा त्वा त्रिष्टुभो[ग] दश ॥२९॥
आ नः प्रजां जगत्य[घ]स्ताः पूर्वापरमिह प्रियम्।
वृहमेतदि[ङ]ति ह्येषा वृहती न्यङ्कुसारिणी ॥३०॥
षष्ठस्यानुष्टुभ[च] सूक्तं तस्यैका त्रिष्टुबु[छ]त्तमा।
तृतीयस्य च सूक्तस्य चतस्रोऽन्त्या अनुष्टुभः[ज] ॥३१॥
पाङ्क्त[झ]मस्य द्वितीयन्तु तत्राप्येवं निबोधिता।
अष्टमस्यानुवाकस्य प्रथमे जागते[ञ]उभे ॥३२॥
तथा चतुर्थे[ट] षष्ठस्य[ठ] पूर्वादुद्धृत्य उत्तमाम्[ड]।
चतुर्थात्पञ्चमीं षाष्ठ्यां सप्तमी[ढ] च व्यपास्य तु ॥३३॥
षष्ठादन्या[ण]स्तु तिस्रस्य त्रिपदानुष्टुभं[त] परम्।
महि[थ]प्रस्तारपाङ्क्ते तु पुरस्ताद्बृहती[द] परा ॥३४॥

---

(क) सू० ८१, ऋ० ४, ५, ६, ७। (ख) सू० ८५। (ग) सू० ८५, ऋ० १४, १९, २०, २१, २३, २४, २६, ३६, ३७, ४४। (घ) सू० ८५, ऋ० १८, २७, ४२। (ङ) सू० ८५, ऋ० ३४। (च) सू० ९०। (छ) सू० ९०, ऋ० १५। (ज) सू० ८७, ऋ० २२, २३, २४, २५। (झ) सू० ८६। (ञ) सू० ९१, ९२। (ट) सू० ९४। (ठ) सू० ९६। (ड) सू० ९१, ऋ० १५। (ढ) सू० ९४, ऋ० ५, ७, १४। (ण) सू० ९६, ऋ० ११, १२, १३। (त) सू० ९७। (थ) सू० ९३। (द) सू० ९३, ऋ० १५।

यज्ञे यज्ञे स विश्वेषां वावर्त्त ता अनुष्टुभः[क] ।
न्यङ्कुसारिण्ये तं ग्रंसं[ख] कृधनः पङ्क्तिरवरैः[ग] ॥२५॥
नवमस्यानुवाकस्य षष्ठसूक्तमिहौष्णिहम्[घ] ।
तस्मिन् पिपीलिकामध्ये[ङ] हरी वज्रमिमे हृचौ ॥२६॥
प्रथमा वास्य गायत्री[च] त्रिष्टुब[छ]स्योत्तमा पुनः ।
नवम्यन्ते द्वितीयस्य चतुर्थी चाष्टमस्य च ॥२७॥
सोदर्कस्येन्द्र दृह्येति जगत्य[ज]स्तास्वतुर्दश ।
मध्येगायत्र्यो[झ] बृहती[ञ] निरा द्यावानिति द्वयोः ॥२८॥
मुद्गलस्य बृहत्या[ट]द्या तृतीया चोत्तमा च या ।
पुनर्वै प्रेता जयता पुनर्दायेत्यनुष्टुभः[ठ] ॥२९॥
दशमस्यानुवाकस्य गायत्री[ड] षष्ठसप्तमे ।
प्रथमं जागतं[ढ] सूक्तं प्रकर्यन्त[ण]श्च चित्र इत् ॥४०॥
उद्धृत्य प्रथमादन्या[त] मितरस्मादुपोत्तमाम्[थ] ।
द्वितीयस्य चतुर्थ्येका जगती[द] चात्र कथ्यते ॥४१॥

---

(क) सू० ९३, ऋ० २, ३, १३। (ख) सू० ९३, ऋ० ११। (ग) सू० ९३, ऋ० ९। (घ) सू० १०५। (ङ) सू० १०५, ऋ० २, ७। (च) सू० १०५, ऋ० १। (छ) सू० १०५, ऋ० ११। (ज) सू०१००, ऋ० १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११। सू० १०१, ऋ० ९, १२। सू० १०७, ऋ० ४। (झ) सू० १०१, ऋ० ४, ६। (ञ) सू० १०१, ऋ० ५। (ट) सू० १०२, ऋ० १, ३, १२। (ठ) सू० १०३, ऋ० १२। सू० १०९, ऋ० ६, ७,। (ड) सू० ११८, ११९। (ढ) सू० ११३। (ण) सू० ११५, ऋ० ९। (त) सू० ११३, ऋ० १०। (थ) सू० ११५, ऋ० ८। (द) सू० ११४, ऋ० ४। सू० ११५, ऋ० १, २, ३, ४, ५, ६, ७।

पञ्चमस्य च सूक्तस्य जागत[क]स्त्वादितो दृच ।
जागत[ख] दशम सूक्तमुद्धृत्याद्याञ्च पञ्चमीम् ॥४१॥
वाक्सूक्तस्य द्वितीया च द्वादशस्य च सप्तमी ।
उत्तमा च विहव्यस्य जगत्य[ग]स्ता इमा ऋच ॥४२॥
चतुर्दश त्वपरिष्टाद्वार्हत[घ] तद्विनोत्तमाम् ।
राचीसूक्त तु गायत्र[ङ] मेवमत्रापि गम्यताम् ॥४४॥
एकादशेऽनुवाके तु द्वितीय[च] जगतीमुखम् ।
तृतीयस्य च सूक्तस्य चतुर्थ्येका त्वनुष्टु[छ]बृक् ॥४५॥
चतुर्थस्य च सूक्तस्य प्रथमा न्यङ्कुसारिणी[ज] ।
उपाद्योपान्त्य प्रस्तारपङ्क्ती[झ] एवावगम्यताम् ॥४६॥
महासतोबृहत्य[ञ]न्त्या विराड्रूपास्तु[ट]शेषिता ।
प्राकर[ठ]महापाङ्क्तौ[ड] तु पञ्चमस्यादितस्तृचौ ॥४७॥
पञ्चमस्य तु त्वमिन्द्रेति त्रिष्टुब[ढ]न्त्या निचृत्पदा ।
षष्ठ सूक्त महापाङ्क्त[ण] तस्यैका पङ्क्ति[त]रुत्तमा ॥४८॥

---

(क) सू० ११७, ऋ० १, २। (ख) सू० १२२, ऋ० २, ३, ४, ५, ६, ७, ८। (ग) सू० १२४, ऋ० ७। सू० १२५, ऋ० २। सू० १२८, ऋ० ६। (घ) सू० १२९, ऋ० १, २, ३, ४, ५, ६, ७। (ङ) सू० १३०। (च) सू० १३०, ऋ० १। (छ) सू० १३१, ऋ० ४। (ज) सू० १३२, ऋ० १। (झ) सू० १३२, ऋ० २, ६। (ञ) सू० १३२, ऋ० ७। (ट) सू० १३२, ऋ० ३, ४, ५। (ठ) सू० १३३, ऋ० १, २, ३। (ड) सू० १३३, ऋ० ४, ५, ६। (ढ) सू० १३३, ऋ० ७ (ण) सू० १३४। (त) सू० १३४, ऋ० ७।

आनुष्टुभान्य[क]स्त्रीणि दशमन्त्वथ जागतम्[ख]।
सूक्ते तु द्वादशे षष्ठी त्रिष्टु[ग]ज्ज्योतिष्मती विराट्[घ] ॥४९॥
ततो बृहत्य[ङ]स्तिस्रोऽन्त्या आद्ये विष्टारपङ्क्तिके[च](१)।
ह्यानुष्टुभं[छ] तदाग्नेयं द्विजगत्या[ज]द्वि सूक्तयोः ॥५०॥
मध्ये चतुर्दशं सूक्तं तदानुष्टुभयो[झ]र्द्वयोः।
गायत्री[ञ] बृहती[ट]ज्ञेया सूक्ते गायत्र्यौ[ठ]परे ॥५१॥
ततो बृहत्युपान्त्यान्त्या पङ्क्ति[ड]र्विष्टारपूर्विका।
आनुष्टुभे[ढ]परे च द्वे जागतं[ण] तदनन्तरम् ॥५२॥
तेषां पूर्वन्तु पंक्त्यन्तं[त] त्रिष्टुबन्तं[थ] तु जागतम्।
उपोत्तमस्य सूक्तस्य बृहत्य[द]स्तिस्र आदितः ॥५३॥
उपरिष्टाज्ज्योतिष्मती[ध] विज्ञेये उत्तरे ऋचौ।
उपान्त्या जगती[न] वाद्या द्वयानुष्टुभ[प] मुत्तरम् ॥५४॥

---

(१) अन्त्योपरिष्टाज्ज्योतिस्तु द्वादशस्यादितो द्वृच॰।
विष्टारपाङ्क्तः शिष्टस्तु ततोवार्हतस्तृचः। इति पाठान्तरम्।

---

(क) सू० १३५, १३६, १३७। (ख) सू० १३८। (ग) सू० १४०, ऋ० ६। (घ) सू० १४०, ऋ० ५। (ङ) सू० १४०, ऋ० २, ३, ४। (च) सू० १४०, ऋ० १। (छ) सू० १४२, ऋ० ७, ८। (ज, सू० १४२, ऋ० १२। (झ) सू० १४१, १४३। (ञ) सू० १४४, ऋ० १। (ट) सू० १४४, ऋ० २। (ठ) सू० १४४, ऋ० ३, ४। (ड) सू० १४४, ऋ० ५। (ढ) सू० १४४, ऋ० ६। (ण) सू० १४५, १४६। (त) सू० १४७। (थ) सू० १४५, ऋ० ६। (द) सू० १४७, ऋ० ५। (ध) सू० १५०, ऋ० १, २, ३। (न) सू० १५०, ऋ० ४, ५। (प) सू० १५०, ऋ० ४। (फ) सू० १५१।

अतोऽन्यत्त्रैष्टुभं[क] सर्वं यदनुक्तमिहापि तत्।
उत्तमस्यानुवाकस्य तुभ्येदमिति जागतम्[ख] ॥५५॥
तथैवास्तारपङ्क्त्य[ग]न्तं विभ्राडिति च जागतम्[घ]।
पञ्चमश्च द्वितीयश्च सप्तमं विंशमेव च ॥५६॥
गायत्राणि[ङ] प्रवस्यैव महीत्यादीनि पञ्च च।
एकविंशश्च षष्ठश्च द्वे चास्य द्वैपदे[च] उभे ॥५७॥
त्रैष्टुभं[छ] तु विराड़ादि द्वैपदं षष्ठमेतयोः।
एतानि त्रैष्टुभान्य[ज]स्य नवमं दशमं तथा ॥५८॥
चतुर्दशं सप्तदशं तथैवाष्टादशं च यत्।
पतङ्गादीनि सूक्तानि त्रैष्टुभान्ये[झ]व सप्त तु ॥५९॥
जगत्यानुष्टुभा[ञ] वाद्ये तेषामाद्यतृतीययोः।
पूर्वेषु पञ्चवर्गेषु दशमेऽनुष्टु[ट]बुत्तमा ॥६०॥
शिष्टान्यनुष्टुभान्ये[ठ]व सूक्तान्यस्य चतुर्दश।
आनुष्टुभेष्वपेहीति सूक्ते पङ्क्ति[ड]रिहोत्तमा ॥६१॥

(क) सू॰ १४७, १४८, १४९। (ख) सू॰ १६७। (ग) सू॰ १७०, ऋ॰ ४। (घ) सू॰ १७०, ऋ॰ १, २, ३। (ङ) सू॰ १५३, १५६, १५८, १७१, १७५, १८५, १८६, १८७, १८८, १८९। (च) सू॰ १५७, १७२। (छ) सू॰ १५७। (ज) सू॰ १६०, १६१, १६५, १६८, १६९। (झ) सू॰ १७७, १७८, १७९, १८०, १८१, १८२, १८३। (ञ) सू॰ १५२, १५४। (ट) सू॰ १६१, ऋ॰ ५। (ठ) सू॰ १५२, १५३, १५५, १५९, १६२, १६३, १६४, १६६, १७३, १७४, १७६, १८४, १९०, १९१। (ड) सू॰ १६४, ऋ॰ ५।

तथा द्वितीया गायत्री(क) प्रसूनव इति लिङ्ग ।
संसमित्युत्तमे सूक्ते द्वतीया त्रिष्टुबे(ख)व च ॥६२॥

छन्दांस्यशेषाण्यनुकीर्त्तितानि
गायत्र्यादीनि चतुर्दशानि ।
तत्तद्विशेषैः सहवैदिकानि
कल्याणदायीनि भवन्तु मह्यम् ॥६३॥

इति शौनकाचार्यविरचिता छन्दोऽनुक्रमणी समाप्ता ॥

---

(क) सू० १७६, ऋ० २। (ख) सू० १९१, ऋ० ३।

## अथ अनुवाकानुक्रमणी ।

पितृदेवर्षिमाद्येभ्यो ब्राह्मणेभ्यश्च सर्वशः ।
आचार्येभ्यो गुरुभ्यश्च प्रणम्य प्रयतः शुचिः ॥१॥
मधुच्छन्दःप्रभृतिभिर्ऋषिभिश्च यथाक्रमात् ।
दृष्टानामनुवाकानामृक्षु वक्ष्याम्यतन्द्रितः ॥२॥
आदौ सूक्तपरीमाणं मन्त्रांश्च क्रममेव च ।
मण्डले मण्डले चैव यावन्तो हि समीरिताः ॥३॥
सूक्तमन्त्रानुवाकानां सूक्तानामृक्समाहिताः ।
पादाक्षरसमाम्नायं छन्दश्चैव प्रतिष्ठितम् ॥४॥
एकैकमनुवाकन्तु त्रिंशानि ब्राह्मणानि तु ।
संवत्सरे संवत्सरे पठेदक्षरशः शुचिः ॥५॥
श्रावणस्य [illegible] मासस्य पौर्णमास्यामुपक्रमः ।
समाप्य तर्पयेद्देवान् पितॄनृषीँऽनुक्रमात् ॥६॥
ऋग्वेदे शैशिरीयायां संहितायां यथाक्रमम् ।
प्रमाणमनुवाकानां सूक्तैः शृणुत शाकलाः ॥७॥
कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च ।
वसिष्ठकश्यपावभरद्वा जमदग्निरथोत्तमः ॥८॥
अग्निमीळे(१) त्रिसूक्तस्तु सुरूपे(२)न्द्र(३)चतुःसूक्तौ ।

---

(अनु॰ १) म॰ १, सू॰ १—३ । (अनु॰ २) म॰ १, सू॰ ४—७ ।
(अनु॰ ३) म॰ १, सू॰ ८—११ ।

अग्नि[४] समान[५]मित्येतौ षट्कौ कस्ये[६]ति सप्तक ॥९॥
लमग्ने[७] पञ्चक विद्यात्म वोयक्ष[८]मथाष्टकम् ।
अग्ने विवस्वद्[९]भित्य[१०] नूचित्ते[११] सप्तकास्त्रय ॥१०॥
पश्वा न[१२]नवक विद्यादुपप्रयन्तो [१३]दशैकञ्च ।
खैलिकानामनादेशे अस्मिन् ग्रन्थेऽनुवाकानाम् ॥११॥
यस्तु पर्यायते वेदे तस्य सज्ञोति न श्रुति. ।
प्र ये शुभन्ते[१४] नवकमिम[१५] द्वादशक विद्यात् ॥१२॥
इन्द्र मित्र [१६]दशैवाथ नासत्याभ्या[१७] न्नु पञ्चकम् ।
कदित्या[१८]षट् पर सप्ताग्नि[१९]मा त्वा जुव [२०]षट्कम् ॥१३॥
वेदिषदे[२१] सप्तदशाबोधी[२२]त्यष्टौ सूक्तानि ।
कया[२३]त्रिपञ्चसूक्तस्तु युवो[२४]द्वादशक विद्यात् ॥१४॥
इत्याद्ये मण्डले दृष्टाश्चत्वारो विंशतिश्च वै ।

---

(अनु॰ ४) म॰ १, सू॰ १२—१७ । (अनु॰ ५) म॰ १ सू॰ १८—२३ ।
(अनु॰ ६) म॰ १ सू॰ २४—३० । (अनु॰ ७) म॰ १ सू॰ ३१—३५ ।
(अनु॰ ८) म॰ १, सू॰ ३६—४३ । (अनु॰ ९) म॰ १, सू॰ ४४—५० ।
(अनु॰ १०) म॰ १, सू॰ ५१—५७ । (अनु॰ ११) म॰ १, सू॰ ५८—६४ ।
(अनु॰ १२) म॰ १, सू॰ ६५—७३ । (अनु॰ १३) म॰ १, सू॰ ७४—८४ ।
(अनु॰ १४) म॰ १, सू॰ ८५—९३ । (अनु॰ १५) म॰ १, सू॰ ९४—१०५ ।
(अनु॰ १६) म॰ १, सू॰ १०६—११५ । (अनु॰ १७ म॰ १, सू॰ ११६—१२० ।
(अनु॰ १८) म॰ १, सू॰ १२१—१२६ । (अनु॰ १९) म॰ १ सू॰ १२७—१३९ ।
(अनु॰ २०) म॰ १, सू॰ १३४—१३९ । (अनु॰ २१) म॰ १, सू॰ १४०—१५६ ।
(अनु॰ २२) म॰ १, सू॰ १५७—१६४ । (अनु॰ २३) म॰ १, सू॰ १६५—१७९ ।
(अनु॰ २४) म॰ १, सू॰ १८०—१९१ ।

गोतमादौमिश्रः कुत्सः परुच्छेपादृषेः परः ।
कुत्साद्दीर्घतमा इति एष माण्डलकः क्रमः ॥१५॥

सं[1] यो[2]गवामा[3]मा ते[4] द्व
यतीयैकादशाध्यायः परे ।
सोमस्य मा नवम[1]द्वादशोक्तं
प्र वो देवाये[2]ति यज्ञद्दशकन्तु विद्यात् ॥१६॥

इच्छन्ति त्वा[1]नवेन्द्रं मति-[2]
स्त्रिपञ्चको नवक इमं मे[3] ।
त्वां ह्यग्ने[1]दश भद्रं[2] पञ्च-[3]
श्लोकादशका उभाविमौ॥ १७॥

त्रयोदशायं स पशुभ्य [1] ईरितोऽयं
पिबे[2]त्येव चापि त्रयोदश ।
त्रयोऽग्निः समिधा [1]चतुर्दश
अतः परोऽष्टादशकः समेधसे[2] ॥१८॥

(अनु॰ १) म॰ २, सू॰ १—११ । (अनु॰ २) म॰ २, सू॰ १२—२२ ।
(अनु॰ ३) म॰ २, सू॰ २३—२९ । (अनु॰ ४) म॰ २, सू॰ ३०—४३ ।
अनु॰ १) म॰ ३, सू॰ १—१२ । (अनु॰ २) म॰ ३, सू॰ १३—२९ ।
(अनु॰ ३) म॰ ३, सू॰ ३०—३८ । (अनु॰ ४) म॰ ३, सू॰ ३९—५३ ।
(अनु॰ ५) म॰ ३, सू॰ ५४—६२ ।
(अनु॰ १) -॰ ४, सू॰ १—१० । (अनु॰ २) म॰ ४, सू॰ ११—२१ ।
अनु॰ ३) म॰ ४, सू॰ २२—३२ । (अनु॰ ४) म॰ ४, सू॰ ३३—४५ ।
(अनु॰ ५) म॰ ४, सू॰ ४६—५८ ।
(अनु॰ १) म॰ ५, सू॰ १—१४ । (अनु॰ २) म॰ ५, सू॰ १५—३२ ।

महि महे[३] द्वादशको विदा[४] स्तथा
रुद्रास: [५]षोडश यदद्य[६] त्रिपञ्चकः ।
त्वं ह्यग्ने[१]पञ्चदश त्व[२]मष्टौ वृषा
मदो[३]विंशतिर्या रयिवः [४]षट्कः ॥१९॥
द्विः पत्नूवे वः[५] स्तुषे[६]द्विसप्तकः
षष्ठः षष्ठे मण्डले योऽनुवाकः ।
अग्निं नरः [१]सप्तदशाथ षोडश
त्वेष यत्[२] प्र शुक्रा[३]ह्यधिका तु विंशतिः ॥२०॥
क ईं व्यक्ताः[४] पञ्चदशोनविंशति-
रप स्वसुः[५] पञ्चदश प्र वीरया[६] ।
मा चि[१]न्नाहीं इन्द्र [२]इन्द्रः सुतेषु[३]
पञ्चायं सप्ताष्टौ वयं [४]द्विपञ्चकः ॥२१॥

---

(अनु० ३) म० ५, सू० ३३—४४ । (अनु० ४) म० ५, सू० ४५—५६ ।
(अनु० ५) म० ५, सू० ५७—७२ । (अनु० ६) म० ५, सू० ७३—८७ ।
(अनु० १) म० ६, सू० १—१५ । (अनु० २) म० ६, सू० १६—२३ ।
(अनु० ३) म० ६, सू० २४—४३ । (अनु० ४) म० ६, सू० ४४—४९ ।
(अनु० ५) म० ६, सू० ५०—६१ । (अनु० ६) म० ६, सू० ६२—७५ ।
(अनु० १) म० ७, सू० १—१७ । (अनु० २) म० ७, सू० १८—३३ ।
(अनु० ३) म० ७, सू० ३४—५५ । (अनु० ४) म० ७, सू० ५६—७० ।
(अनु० ५) म० ७, सू० ७१—८९ । (अनु० ६) म० ७, सू० ९०—१०४ ।
अनु० १) म० ८, सू० १—५ । (अनु० २) म० ८, सू० ६—१२ ।
(अनु० ३) म० ८, सू० १३- २० । (अनु० ४) म० ८, सू० २१—३० ।

सत्येन[7] षट् सं [8]नवेन्द्र [9]त्रयोदश ॥२४॥
तमस्य द्यावापृथिवी[10]द्यष्टकः
परस्त्वयोर्विंशतिर्ना सदासीत्[11]।
ऋग्वेदान्यो द्वादशकोऽनुवाक-
श्चत्वारिंशच्चास इत्ये[12]ति चास्मिन् ॥२५॥
आद्ये चतुर्विंशतिरिहानुवाका
अतः परं मण्डलं यच्चतुष्कम्।
द्वे पञ्चके त्रीणि षट्कानि चैव
दशाष्टमं सप्त नवमं द्वादशान्त्यम् ॥२६॥
एकाधिका स्यान्नवतिः शतञ्च
वदन्ति वै मण्डलमादितो यत्।
चत्वारिंशत्त्रीणि चाहुर्द्वितीयं
सूक्ते च षष्टिश्च तृतीयमाहुः ॥२७॥
अष्टापञ्चाशत्त्वपि यच्चतुर्थं
सप्ताधिकाशीतिरतः परं स्यात्।
पञ्चाधिका सप्ततिरुत्तरन्तु
चत्वारि वाषिष्ठमथो शतञ्च ॥२८॥
द्वे चैव सूक्ते नवतिश्च विद्या-

---

(अनु०७) म० १०, सू० ८५—९०। (अनु०८) म०१०, सू० ९१—९९।
(अनु०९) म०१०,सू०१००—११२। (अनु०१०)म०१०सू०११३—१२८।
(अनु०११)म०१०,सू०१२९—१५१। (अनु०१२)म०१०,सू०१५२—१९१।

द्व्यष्टकं शतमं वै शतं स्यात् ।
चतुर्दश त्वाक्षरपादिकान्य-
ध्याये पदूनं दशमे तथैव ॥१९॥
एतत्सहस्रं दश सप्त चैवा-
ष्टावतो बाष्कलकेऽधिकानि ।
तान् पारणे शाकले शैशिरीये
वदन्ति शिष्टा न खिलेषु विप्राः ॥२०॥
पञ्चाशीतिर्दाशतयेऽनुवाका
दृष्टाः पुराप्यृषिभिर्मन्त्रात्मभिः ।
यस्तानृग्विदिह वेदाध्यधीते
स नाकपृष्ठं भजते च शश्वत् ॥२१॥
अध्यायानां चतुःषष्टिर्मण्डलानि दशैव तु ।
वर्गाणां तु सहस्रे द्वे संख्याते च षडुत्तरे ॥२२॥
सहस्रमेतत् सूक्तानां निश्चितं खैलिकैर्विना ।
दश सप्त च पर्यन्ते संख्यातं वै पदद्वयम् ॥२३॥
एकर्चे एकवर्गः स्याद्दिकश्च नवकस्तथा ।
द्वौ वर्गौ तु द्व्यृचौ ज्ञेयौ न्यूनं द्व्यशतं स्मृतम् ॥२४॥
चतुष्कं शतमेकञ्च चत्वारः सप्ततिस्तथा ।
पञ्चकानां सहस्रन्तु द्वे च शतोत्तरे शते ॥२५॥
त्रीणि च शतानि षट्काणाञ्चत्वारिंशत् षड्वर्गाः ।
शतमूनविंशकं सप्तकानां न्यूना षष्टिरष्टकानाम् ॥२६॥
ऋचां दशसहस्राणि ऋचां पञ्चशतानि च ।

ऋचामशीतिः पादश्च पारणं सम्प्रकीर्तितम् ॥२७॥

अर्धर्चानां सहस्राणामेकविंशतिकं तथा।
शतद्वयन्तु द्वात्रिंशत् सपादं मुनिभिः पुरा ॥२८॥

शाकल्यदृष्टे पदलक्षमेकं
सार्धञ्च वेदे त्रिसहस्रयुक्तम्।
शतानि चाष्टौ दशकद्वयञ्च
पदानि षट् चेति च चर्चितानि॥२९॥

एकञ्च दशसहस्रं दश च सहस्राणि सप्त च शतानि चर्चापदानि ज्ञेयानि पदानि चान्यानि चत्वारि। चत्वारि वा शतसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि ॥

इत्यनुवाकानुक्रमणी समाप्ता ॥

---

NOTE.—The last 21 pages had not the benefit of the late Raja Rajendralala Mitra's revision.